गर्ज शब्दे । २२३ । गर्जति । जगर्ज । गर्जः ।

तर्ज भर्त्सने । २२४ । तर्जति । ततर्ज । तर्जनी ।

कर्ज व्यथने । २२५ । कर्जति । चकर्ज । कर्जः ।

खर्ज मार्जने च । । २२६ । खर्जति । चखर्जः । खर्जनः । खर्जूरः । खर्जिपिञ्जादिभ्य ऊरोलचौ (उण्, ४।५२९) । कषिवमितनिधनिसर्जिखर्जिभ्य ऊः ( उण्, १।८१) । खर्जूः ।

अज गतिक्षेपणयोः । २२७ । अजति । प्रवेता प्राजिता (43) । प्रवयणं प्राजनम् । समजः समाजः । व्याजः । वेवीयते इति यङि आर्धधातुकविषये वीभावः । संज्ञायां समजेत्यादिना (३।३।९९) क्यप् । समज्या । अजिरशिशिरेत्यादिना (उण्, १।५३) किरच् । अजिरं चत्वरम् । अजः । जातिलक्षणङीषि प्राप्ते टाप् । अजा छागी ।

तेज पालने । २२८ । तेजति । तेजः ।

खज मन्थे च । २२९ । खजति । खजः । खाजकः । खजाकः । खजाका ।

खजि गतिवैकल्ये । २३० । खञ्जति । चखञ्ज । खञ्जः । खञ्जनः ।

एजृ कम्पने । २३१ । एजति । एजाञ्चकार । मा भवानेजिजत् । अङ्गमेजयः ।

टु ओ स्फूर्जा वज्रनिर्घोषे । २३२ । स्फूर्जति । स्फूर्जथुः । स्फुर्गणः । स्फूर्ग्णमनेन (44) स्फूर्जितमनेन । दीर्घोकारस्योपदेश उपधायाश्चेत्य- (८।२।७८) स्यानित्यत्वज्ञापनार्थइति । तेन मुर्च्छति हुर्च्छति स्फुर्च्छतीत्यपि भवतीति केचित् ।

---

(43) अजेर् व्यघञपोरित्यत्र (२।४।५६) वलादावार्धधातुके वेति भाष्यम् । एतच्च तत्र ब्राह्मणसारथ्योर्विवादात् "एवं हि कश्चिद् वैयाकरण आह कोऽस्य रथस्य प्रवेतेति । सूत आह अहमायुष्मन्नस्य रथस्य प्राजितेति । वैयाकरण आह अपशब्द इति । सूत आह प्राप्तिज्ञो देवानाम् प्रियः । न त्विष्टिज्ञः । इष्यत एतद्रूपमिति । वैयाकरण आह अहो खल्वनेन दुरुतेन बाध्यामह इति । सूत आह न खलु वेञः सूतः । सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् । इति ( महाभाष्य II. 4. 56 )

(44) स्फुर्ग्णमिति प्रामादिकम् । चोः कुरिति (८।२।३०) गकारलोपस्य शास्त्राभावात् ।

चि चये। २३३। चयति। निष्ठायामण्यदर्थे इति दीर्घः (६।४।६०)। चीयो दीर्घादिति (८।२।४६) नत्वम्। चीणः। चितम्। चेता। चि निवासगत्योः चिष् हिंसायामिति च गणान्तरे पठ्यते। चियति। चिणोति। उत्तरधातुसाधर्म्यानुरोधेन चाजन्तोऽप्ययमत्र निर्दिश्यते। (45)

चीज अव्यक्ते शब्दे। २३४। चीजति। अस्यानन्तरं कूजतिर्न निर्दिश्यते। कूजतेः स्वरप्रयुक्तत्वात् पृथङ् निर्देशः। अन्यस्त्वाह चीजकूजोः पृथक् करणादर्थभेदोऽनुसन्धेयः। तथाहि कूजन्ति कपोता इत्युक्ते स्वनन्तीति गम्यते। चीजति दासीत्युक्ते सखेदं स्वनतीति गम्यते। एवमन्यत्रापि धातुभेदेऽर्थभेदोऽवगन्तव्यः।

लज लजि भर्त्सने। २३५।२३६। लजति। लञ्जति। लङ्गः। रङ्गः। ड़ङ्गः। रलयो डलयोरेकत्वस्मरणमिति। संज्ञायां ण्वुल् (६।३।१०९) लञ्जिका वेश्या।

लाज़ लाजि भर्त्सने च। २३७।२३८। चकारो भिन्नक्रमः। एतावपि भर्जने पठ्येते इत्यर्थः। लाजति। लाजाः। लाञ्जति।

जज जजि युद्धे। २३९।२४०। जजति। जञ्जति। जङ्गः। जङ्गलम्। तुज तुजि हिंसायाम्। २४१।२४२। तोजति। तुतोज। तुजि पालने च। तुञ्जति। तुतुञ्ज। तुङ्गः।

गज गजि गृज गृजि मुज मुजि शब्दार्थाः। २४३—२४८। गज मदने च। गजति। जगाज। गजः। गाजः। गञ्जति। गञ्जा। गञ्जः। गर्जति। जगर्ज। जगृजतुः। जगृजुः। गर्जः। गृञ्जति। जरीगृञ्ज्यते। मोजति। मुञ्जति। मुञ्जः। अच्।

वज व्रज गतौ। २४९।२५०। वजति। ववाज। एत्वाभ्यासलोपप्रतिषेधश्चास्य चान्द्रैरुदाहृतः। ववजतुः। ववजुः। अवजीत्। अवाजीत्। वाजः। व्रजति। वव्राज। अव्राजीत्। प्रव्रजितः। परिव्राट्। व्रजः। व्रज्या।

---

(45) अत्र माधवः—"इह पाठस्तु उत्तरधातुसाम्यादिति मैत्रेये प्रतिपादित"मिति।

इति परस्मैभाषा उदात्ता उदात्तेतः । उदात्तत्वमिदं चिधातुवर्जम् । तस्य त्वजन्तत्वादनुदात्तत्त्वमित्यागमः । तर्कुग्रामन्यायेनोदात्त इत्युक्तम् । (46)

अथात्मनेपदिनष्टवर्गान्ताः ।

अट्ट अतिक्रमणहिंसयोः । २५१ । दोपधोऽयं स्मर्य्यते । अट्टते । आनट्टे । आट्टिटत् । अट्टिटिषते । अट्टयति । अट्टायते । ष्टुना ष्टुरित्यत्र ( ८।४।४१ ) न्यासकारेण तकारोपधोऽयमित्युक्तम् । तथाच अतिट्टिषते । आतिट्टदिति भवति । (47)

वेष्ट वेष्टने । २५२ । वेष्टते । विवेष्टे । अविवेष्टत् । अववेष्टत् । वेष्टः ।

चेष्ट चेष्टायाम् । २५३ । चेष्टते । अचिचेष्टत् । अचचेष्टत् । चेष्टा ।

गोष्ट लोष्ट संघाते । ३५४।२५५ । गोष्टते । गोष्टः । लोष्टते । लोष्टः ।

घट्ट चलने । २५६ । घट्टते । जघट्टे । घट्टः । घट्टा ।

स्फुट विकसने । २५७ । स्फोटते । पुस्फुटे । स्फुटतीति विशरणे भविष्यति ।

अठि गतौ । २५८ । अण्ठते । आनण्ठे ।

वठि एकचर्य्यायाम् । २५९ । वण्ठते । वण्ठः ।

मठि कठि शोके । २६०।२६१ । मण्ठते । मण्ठयते । कण्ठते । कण्ठः । उत्कण्ठते । उत्कण्ठयते । उत्कण्ठा ।

मुठि पालने । २६२ । मुण्ठते । मुमुण्ठे ।

हेठ विबाधायाम् । २६३ । हेठते । जिहेठे । विहेठितः । हेठो वधः ।

एठ च । २६४ । एठते । एठाञ्चक्रे ।

हिडि गत्यनादरयोः । २६५ । हिण्डते । जिहिण्डे । हिण्डनम् ।

कुड़ि दाहे । २६६ । कुण्डते । कुण्डः । कुण्डा । कुण्डी ।

हुड़ि संघाते । २६७ । हुण्डते । हुण्डा । हुण्डनम् ।

वड़ि वेष्टने । २६८ । वण्डते ।

मड़ि च । २६९ । मण्डते । मण्डनम् । मण्डः । वृषादित्वात्

---

(46) भट्टग्रामन्यायादिति ङपुस्तके पाठः ।

(47) माधवादिमते तु तोपधत्वेपि अट्टिटिषते इत्येव रूपं । नतु अतिट्टिषते । णौ चङि आट्टिटत् । नतु आतिट्टदिति ।

कलच्। मण्डलम्। गौरादित्वात् मण्डली। मण्डतीति भूषायां भवति।

भडि परिहासे। २७०। भण्डते। भण्डः। भाण्डम्। (48)

पिडि संघाते। २७१। पिण्डते। पिण्डः। गौरादित्वात् पिण्डी। हुडि पिडि संघात इति नोक्तम्। पिडेः पवर्गाद्यनुरोधात्।

मुडि मार्जने। २७२। मुण्डते मुखम्। मुण्डनम्। मुण्डतीति खण्डने वक्ष्यति।

तुडि तोडने। २७३। तुण्डते। तुतुण्डे। तुण्डः। तुण्डा। इन् सर्वधातुभ्यः (उण्, ४।५५८)। तुण्डिः। तुण्डिभः।

पडि गतौ। २७४। पण्डते। पण्डा। पण्डितः।

कडि मदे। २७५। कण्डते। चकण्डे।

हुडि हरणे। हुण्डते। २७६।

चडि कोपे। २७७। चण्डते। चण्डः। पतिचण्डिभ्यामालञ्। (उण्, १।११४) चण्डालः। स्वार्थेऽण्। चाण्डालः।

शडि रुजायां संघाते च। २७८। शण्डते। शशण्डे। शण्डः। परमशण्डः। कुशण्डिका।

तडि ताडने। २७९। तण्डते। ततण्डे। वितण्डा।

खडि मन्थे। २८०। खण्डते। खण्डः। खड खडि कडि भेद इति चुरादौ पठ्यते। तस्य खण्डयति। खण्डना।

हेडृ होडृ अनादरे। २८१।२८२। हेडते। त्यजतीत्यर्थः। अजिहेडत् हेडा। हेला। होडते। जुहोडे। होडा। होडः। विहोडते। विहोडाञ्चक्रे। (49)। हेड वेष्टन इति घटादौ पठ्यते। हेडति। हिडयति। अनादरे तु हेडयति।

वाडृ आप्लाव्ये। २८३। वाडते। ववाडे। वाडः।

---

(48) एतदनन्तरं ङपुस्तके भुडि भरणे। भुण्डते। बुभुण्डे। भुन्ड इति पठ्यते।

(49) होड इति पचाद्यजन्तादाचारे क्विप्। आचारेऽवगल्भक्लीबहोडेभ्यः क्विब् वेति (३।१।१२, वा)। एतेषामनुदात्तेत्त्वस्य प्रतिज्ञायते। विहोडसे। अनेकाच्त्वादाम्। विहोडाञ्चक्र इति।

ड्राड़ॢ ध्राड़ॢ विशरणे । २८४।२८५ । ड्राड़ते । ध्राड़ते । ध्राड़ः ।

शाड़ॢ श्लाघायाम् । २८६ । शाड़ते । शशाड़े । शाड़ः । शालः । रूपशाली । शाड़ा । शाला ।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः ।

अथ टवर्गान्ताः परस्मैपदिनः कथ्यन्ते ।

शौटृ गर्वे । २८७ । शौटति । अशुशौटत् । शौटीरः । (उण्, ४।४६८) । शौटीरस्त्यागिधीरयोः ।

यौटृ संबन्धे । २८८ । यौटति । अयुयौटत् । यौटः । पृषोदरादित्वाद् ह्रस्वत्वे योटनमिति ।

मेटृ म्लेटृ म्लेटृ उन्मादने । २८९—२९१ । मेटति । अमिमेटत् । मेटकम् । म्लेटति । अमिम्लेटत् । म्लेटति । अमिम्लेटत् । (50)

कटे वर्षावरणयोः । २९२ । कटति । अकटीत् । कटिः । कटः । कटकं बलयोऽस्त्रियाम् । कटनगरे जातः । शैषिकश्छः । कटनगरीयः । कटघोषीयः । (51)

अट पट गतौ । २९३।२९४ । अटति । आट । आटः । अटाट्यते । पटति । पटः । पटी । पाटः ।

रट परिभाषणे । २९५ । रटति । क इति शब्दं रटति करटः ।

लट बाल्ये । २९६ । लटति । लाटः । लट्वा ।

वट वेष्टने । २९७ । वटति । वटः । वटकः । वाटकः । वटिः । तुण्डिबलिवटेर्भः (५।२।१३९) । वटिभः । वाटः । हलश्चेत्यधिकरणे घञ् (३।३।१२१) । वाटिका ।

शट रुजाविशरणगत्यवसादनेषु । २९८ । शटति । शशाट । शाटकः । शाटः । शाटी ।

किट खिट त्रासे । २९९।३०० । केटति । खेटति । खेटः ।

शिट षिट अनादरे । ३०१ । ३०२ । शेटति । सेटति । सिषेट ।

---

(50) ङपुस्तके मेड़ॄ म्लेड़ॄ इति पाठः । आम्रेड़ितमिति क्तप्रत्यये । "टान्तमध्ये पाठस्त्वर्थसाम्यादिति माधवः ।   (51) प्राचां कटादेरिति (४।२।१३९) छः । अणोऽपवादः ।

जट झट संघाते। ३०३। ३०४। जटति। जटः। जटा। झटति। झाटः। कर्मणि घञ्।

भट भृतौ। ३०५। भटति। भाटः। भटः। भटित्वम्।

तट उच्छ्राये। ३०६। तटति। तटः। तटम्। तटी। तटिनी सरित्।

खट काङ्क्षायाम्। ३०७। खटति। खटः। खाटः। खट्वा।

णट नृतौ। ३०८। नटति। प्रणटति। नटः। नाटः। नाटकः। नाटिका।

पिट शब्दसंघातयोः। पेटति। पेटः। पेटकः। पेटी। पिटः। पिटकः। बलाकादयश्चेति (उण् ४।५३) आकः। पिटाकः। ३०९।

हट दीप्तौ। ३१०। हटति। जहाट। हाटः। हाटकम्।

षट अवयवे। ३११। सटति। सिषाटयिषति। साटः। सटा।

लुट विलोडने। ३१२। लोटति। लोटः। दिवादिष्वप्ययं पठ्यते। लुट्यति।

चिट परप्रेष्ये। ३१३। चेटति। चेटः। गौरादित्वाच् चेटी। चेटकः।

विट शब्दे। ३१४। वेटति। विटः। इगुपधात् कः। विटपः। वेटः।

बिट बिड आक्रोशे। ३१५। ३१६। बेटति। बेटः। बेडति। बिडालः।

इट किट कट ई गतौ। ३१७-३२०। एटति। इयेट। एटः। केटति। चिकेट। केटः। कटति। अकटीत् अकाटीत्। कटिमिदितमेके पठन्ति। तन्मते कण्टति। कण्टः। कण्टकम्। अयति। इयाय। इयतुः। वर्णाश्रयत्वाद्वृत्त्येह कार्याणि क्रियन्त इति यणादेशं कृत्वा स्थानिवत्त्वाद् द्विर्वचनमत्र। इकारवत्प्रकरणादयति रूपदिष्टः। तदनुरोधेन चान्ये। अयतिं दीर्घमिच्छन्ति चान्द्राः। व्यपदेशिवद्भावेन गुरुमत्त्वादाम्प्रत्ययमुदाहरन्ति च। अयाञ्चकारेति।

मडि भूषायाम्। ३२१। मण्डति। मण्डकम्। मण्डनम्। मण्डनः। शलिमण्डिभ्यामूकण् (उण् ४।४८९)। मण्डूकः। कूपमण्डूकः। पात्रेसमितादित्वात्।

कुठि कुडि वैकल्ये । ३२२ । ३२३ कुण्ठति । कुण्ठा । कुण्ठः । कुण्डति । कुण्डा । कुण्डम् ।

मुट प्रमर्द्दने । मोटति । मोटनम् । ३२४ । (52)

चुटि अल्पीभावे । चुण्टति । चुचुण्ट । चुण्टः । ३२५ । चुट इत्येके । चोटति । चोटी ।

मुडि खण्डने । ३२६ । मुण्डति । मुण्डः । उकारवत्पवर्गादिप्रकरणाद् इहायं निर्द्दिश्यते । मडि भूषायामिति उकारवान्न भवतीति डकारान्तोऽप्यकारवत्त्वादादौ निर्द्दिष्टः । पुडि चेत्येके । पुण्डति । पुण्डः । पुण्ड्रम् । पुण्डरीकम् । ३२७ ।

वटि विभाजने । ३२८ । वण्टति धनम् । वण्टनम् । वण्टः ।

रुटि लुटि स्तेये । ३२९ । ३० । रुण्टति । रुण्टः । लुण्टति । लुण्टाकः । लुण्टयतीति चुरादिपाठात् ।

स्फुटिर् विशरणे । ३३१ । स्फोटति । अस्फुटत् । अस्फोटीत् । स्फोटः । स्फुट विकशन इति कुटादौ पठ्यते । स्फुटति । अस्फुटीत् ।

पठ व्यक्तायां वाचि । ३३२ । पठति । पपाठ । पाठः ।

वठ स्थौल्ये । ३३३ । वठति । वठः । वाठः । वाठरः ।

मठ मदनिवासयोः । ३३४ । मठति । मठः । माठः ।

कठ कृच्छ्रजीवने । ३३५ । कठति । कठनम् । कठः । प्रोक्तार्थे कलापिवैशम्पायनान्तेवासिभ्यश्चेति (४।३।१०४) णिनिः । तस्य कठचरकाल्लुगिति (४।३।१०७) लुक् । ततस्तदधीत इत्यण् । तस्य प्रोक्ताल्लुगिति (४।२।६४) लुक् । ततस्तस्येदमित्यर्थे गोत्रचरणाद् वुञ् (४।३।१२६) काठकं छन्दः शाखाविशेषः ।

रठ परिभाषणे । ३३६ । रठति । रराठ । रेठतुः । राठः ।

हठ प्लुतिशङ्कुबन्धनयोः । ३३७ । हठति । जहाठ । हठः । हठनम् ।

---

(52) अत्र माधवः—"मुड इति धनपालः । पुड इति पकारादिडान्त इति शाकटायनः । क्षीरस्वामी तु द्वावपि इदितौ पपाठ । मैत्रेयस्तु टान्तमेव पठित्वा मुडि खण्डने इति चाग्रे पठित्वा पुडि च इत्येक इत्याह इति" ।

रुठ लुठ उपघाते। ३३८।३३९। रोठति। लोठति। लोठः। निर्लोठति। निर्लोठनम्।

उठ इत्येके। ३४०। ओठति। उवोठ। ओठः।

पिठ हिंसासंक्लेशयोः। ३४१। पेठति। पिठः। पेठः।

शठ कैतवे च। ३४२। शठति। शठः।

शुठ गतिप्रतीघाते। ३४३। शोठति। शोठः।

कुठि च। ३४४। कुण्ठति। कुण्ठः।

लुठि आलस्ये। ३४५। गतिप्रतिघातेऽपि वृत्तिरस्य। लुण्ठति। लुण्ठः।

शुठि शोषणे। ३४६। शुण्ठति। शुण्ठः। शुण्ठी। पचाद्यजन्ताद् गौरादिङीष्।

रुठि लुठि गतौ। ३४७।३४८। रुण्ठति। रुण्ठः। लुण्ठति। लुण्ठः।

चुड्ड भावकरणे। ३४९। चुड्डति। चुड्डा। क्विपि चुत्।

अड्ड अभियोगे। ३५०। अड्डति। अड्डिडिषति। अड्डा। क्विपि अत्। दोपधावेतौ। तथा

कड्डिरपि। ३५१। कड्डति। कड्डनः। क्विपि। कत्। कज्जलम्।

क्रीडृ विहारे। ३५२। क्रीडति। आक्रीडते। संक्रीडते। अनुक्रीडते। परिक्रीडते। अचिक्रीडत्। क्रीडा।

तुडृ तोडने। ३५३। तोडति। अतुतोडत्। तोडः।

हुडृ होडृ गतौ। ३५४।३५५। हुडति। अजुहुडत्। होडति। अजुहोडत्। होड्यम्।

रौडृ अनादरे। ३५६। रौडति। अररौडत्।

रोडृ लोडृ उन्मादने। ३५७।३५८। रोडति। अरुरोडत्। रोडः। रोडकः। रोडा। लोडति। अलुलोडत्। लोडा। लोडः। डलयोरेकत्वस्मरणाल् लोलः।

अड उद्यमे। ३५९। अडति। अडः। व्यडः। व्याडिः। अत इञ् (४।१।९४)। स्वागतादित्वादैच्प्रतिषेधः।

लड विकाशे । ३६० । लडति । ललति । लालयति । लालनम् । डलयोरैक्यात् ।

कड़ मदे । ३६१ । कड़ति । कड़ः । कलः । कलनम् । निष्कलः (53) । निष्कला । कलं त्रायते रक्षतीति कलत्रम् । कड़त्रम् । तुदादावप्ययं पठिष्यते । विकलः । कलति ।

कड्ड कार्कश्ये । ३६२ । कड्डति । चकड्ड । क्विपि कत् ।

गड़ि वदनैकदेशे । ३६३ । गण्डति । गण्डः । सर्वधातुभ्य इन् । पृषोदरादित्वाद्दीर्घः । गाण्डिः । गाण्ड्यजगात् संज्ञायामिति ( ५.२।११० ) मत्वर्थे वः । गाण्डिवम् । "अधिरोहति गाण्डिवं महेषौ ।" कृदिकारादितिङीष् । गाण्डी । तुल्या हि संहिता गाण्ड्यजगादिति । तस्मादतोऽपि वः । गाण्डीवम् । (54)

इति परस्मैभाषा उदात्ता उदात्तेतः । उदात्तत्वमयतिवर्जम् । भट्टग्रामन्यायेन तूदात्ता इति सामान्योक्तिः ।

अथ पवर्गान्ता आत्मनेपदिनः ।

तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः । ३६४ – ३६७ । तेपते । तेप्ता । अतितेपत् । तिपः । तेपृ कम्पने च । तेपते। अतितेपत् । तेपः । स्तेपते । तिष्टिपे । तिष्टेपे ।

ग्लेपृ दैन्ये । ३६८ । ग्लेपते । अजिग्लेपत् ।

गेपृ च । ३६९ । गेपते । अजिगेपत् ।

टु वेपृ कम्पने । ३७० । वेपते । विवेपे । वेपथुः । न भाभू इत्यादिना णत्वप्रतिषेधः ( ८.४३४ ) । प्रवेपनम् । (55)

केपृ गेपृ ग्लेपृ च । ३७१ । कम्पने इत्यपेक्षते । केपते । अचिकेपत् । गेपते । अजिगेपत् । ग्लेपते । ग्लेपृधातुः पुनः पठ्यते । दैन्यादर्थान्तरार्थम् ।

---

(53) ङपुस्तके तु गौरादित्वात् ङीष् । निष्कलीति पाठः ।

(54) गाण्डीवी कनकशिलानिभं भुजाभ्यामिति च भारवेः प्रयोगः ।

(55) एतस्मादनन्तरं कुवेप च । कुवेपते । कुवेप इति क्वचिद् दृश्यते । एतत्तु माधवादौ नास्ति । नापि सर्वेषु धातुप्रदीपपुस्तकेषु ।

पेबृ षेबृ सेवने । ३७२।३७३ । पेबते । अपिपेबत् । सेबते ।

रेबृ प्लेबृ गतौ । ३७४।३७५ । रेबते । रेबा । प्लेबते । (56)

त्रपूष् लज्जायाम् । ३७६ । त्रपते । त्रेपे । त्रपिता त्रप्ता । त्रपा । अपत्रपिष्णुः । त्रपुः । अपत्राप्यम् ।

कपि चलने । ३७७ । कम्पते । चकम्पे । कम्पयते । कम्पः । अनुकम्पा । कम्रः । नमिकम्पीत्यादिना (३।२।१६७) रः । ताच्छीलिकेषु क्वचिद् वासरूपविधिरस्तीति ज्ञापितमेतदत्र दीपिग्रहणेन । तेन कम्पना शाखा ।

रबि लबि अबि शब्दे । ३७८-३८० । रम्बते । रम्बयते । ररम्बे । करम्बः । लबि अवस्रंसने च । लम्बते । ललम्बे । अलाबूः । नञि लम्बेर्नलोपश्चेत्यूप्रत्ययो वृद्धिश्च । (उण्,१।८७) । विडम्बते । विडम्बयति । "प्रभातकल्पां रजनीं व्यडम्बयत् ।" डलयोरैक्यात् । अम्बते । आनम्बे । अम्बः । पचाद्यच् । अम्बा । अम्बरम् ।

कबृ वर्णे । ३८१ । कबते । चकबे । अचकाबत् । मद्गुरादयश्चेति (उण् १।४१) कुरच् । रमागमश्च । कर्बुरः । इन् सर्वधातुभ्य इति कबिः ।

क्लीबृ अधार्ष्ट्ये । ३८२ । क्लीबते । चिक्लीबे । अचिक्लीबत् । क्लीबम् । क्लीबाञ्चक्रे । (57)

क्षीब मदे । ३८३ । क्षीबते । क्तप्रत्यये निपातनात् क्षीबः ।

शीभृ कत्थने । ३८४ । शीभते । अशिशीभत् । शीभः ।

चीभृ च । ३८५ । चीभते । अचिचीभत् ।

रेभृ शब्दे । ३८६ । रेभते । अरिरेभत् । विरिभ्भः । विरेभितः ।

ष्टभि स्कभि प्रतिबन्धे । ३८७।३८८ । स्तम्भते । तिष्टम्भयिषति । विष्टम्भते । विष्टभ्यते इति स्तभ्नातेः सौत्रधातो रूपम् । टकारपरः षकारोऽयमित्येके । उपष्टम्भते । टिष्टम्भिषते । स्कम्भते । चस्कम्भे । विस्कम्भ्यते (58) । विष्कभ्यत इति स्कभ्नाते रूपम् ।

---

(56) क्वचित् रेवृ प्लेवृ इति पाठः । स च भट्टोजिमाधवाभ्यां धृतः ।

(57) क्लीबशब्दात् पचौ क्विपि लिट्याम् ।

(58) वेः स्कभ्नाते र्नित्यमिति (८।३।७७) आनिर्देशाद् नास्य षत्वम् ।

जभ जृभि गात्रविनामे । ३८९।३९० । जभते । जम्भम् । जम्भा (59) । जभितम् । जभी इत्येके । जभते । जम्भम् । नुम्विधावुपदेशिवद्वचनमिति त्विदितामिव नुम्विधाविष्यते । धातुग्रहणात् । अतो गुरोश्च हल इत्येतदिह (३।३।१०३) न क्रियते । जब्धिः । तथाच धातुपारायणे रभ राभस्य इत्यस्य क्तिन्नुदाहृतः । रब्धिः । जृम्भते । जजृम्भे । जरीजृभ्यते । जृम्भम् । विजृम्भणम् । जृम्भा । विजृम्भितम् ।

शल्भ कत्थने । ३९१ । शल्भते ।

वल्भ भोजने । ३९२ । वल्भते । वल्भितम् ।

गल्भ धार्ष्ट्ये । ३९३ । गल्भते । जगल्भे । प्रगल्भः । गल्भायते । अवगल्भते । अवगल्भाञ्चक्रे ।

स्रन्सु प्रमादे । ३९४ । स्रंसते । सस्रंसे । अस्रंसिष्ट । स्रंसित्वा स्रस्त्वा । स्रस्तम् । सास्रस्यते । नीग्वञ्चु इत्यादिना (७।४।८४) नीगागमो न भवति । तत्र ध्वन्सुसाहचर्य्यात् स एव स्रन्सु गृह्यते । यङोऽचि चेति (२।४।७४) लुक् । स चातोलोप (६।४।४८) मक्कत्वा । सर्वविधिभ्यो लुग्विधिर्बलवानिति न्यायात् । तेनातोलोपस्य स्थानिवद्भावादनुनासिकलोपो न भवति । सास्रंस इति । एवञ्च कृत्वा लोलुवाद्यर्थं न धातुलोप (१।१।४) इत्युक्तम् । द्युतादावप्ययं पठिष्यते । तस्यैव ध्वन्सुभ्रन्सुसाहचर्य्यान् नीगित्याहुः । दत्ते पुनरसाहचर्य्यम् इच्छन्ति उखास्रदिति । संयोगान्तसाधर्म्येण सकारान्तोऽप्ययमत्र निर्दिश्यते । संयोगान्तप्रकरणानुरोधात् ।

ष्टुभु स्तम्भे । ३९५ । स्तोभते । प्रतिष्टोभते । तुष्टुभे । अतुष्टुभत् । स्तुभित्वा स्तोभित्वा स्तुब्ध्वा । स्तोभः । त्रिष्टुप् । अनुष्टुप् । आनुष्टुभम् । स्तुब्धम् ।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः । उदात्ता इति तिपिवर्जम् ।

अथ परस्मैपदिनः पवर्गान्ताः ।

गुपू रक्षणे । ३९६ । गोपायति । जुगोप गोपायाञ्चकार ।

---

(59) रधिजभोरचीति नुम् (७।१।६१) ।

धूप सन्तापे। ३९७। धूपायति। दुधूप धूपायाञ्चकार।

जप जल्प व्यक्तायां वाचि। ३९८। ३९९। जप मानसे च। जपति। भावगर्हायां यङ्। जञ्जप्यते। जप्यम्। कर्णेजपः खलः। जपः। जाप्यन्तु बहुलवचनात्। जल्पति। जल्पाकः। जल्पः।

चप सान्त्वने। ४००। चपति। चपो वृक्षः। तस्य विकारः। चापी धनुः। तालादिभ्योऽणिति (४।३।१५२)।

षप समवाये। ४०१। सपति। सिषापयिषति।

रप लप व्यक्तायां वाचि। ४०२।४०३। रपति। राप्यम्। लपति। लाप्यम्। आसुयु इत्यादिना (३।१।१२६) ण्यत्। अदुपधाः पूर्वोक्ता यतं भजन्ते। इमौ तु ण्यतमित्यर्थसाम्येऽपि जपिजल्पिभ्यां पृथगेतयोर् निर्देशः।

चुप मन्दायां गतौ। ४०४। चोपति। चुचोप।

तुप तुम्प त्रुप त्रुम्प तुफ तुन्फ त्रुफ त्रुन्फ हिंसार्थाः। ४०५-४१२। तोपति। तुतोप। तुतुपिषति तुतोपिषति। तुपितमनेन। तुम्पति। प्रात् तुम्पतौ गवि कर्त्तरीति पारस्करादिपाठात् सुटि (६।१।१५७) प्रस्तुम्पको वृषः (60)। तुपितः। तुपितवान्। त्रोपति। त्रुम्पति। तोफति। तुम्फति। तुफित्वा तुम्फित्वा। त्रोफति। त्रुम्फति।

पर्प रफ रफि अर्ब पर्ब वर्ब मर्ब षर्ब कर्ब खर्ब गर्ब शर्ब चर्ब गतौ। ४१३। ४२५। पर्बति। रफति। रम्फति। रम्फित्वा रफित्वा। अर्बति। आनर्ब। पर्बति। वर्बति। मर्बति। सर्बति। कर्बति। खर्बति। गर्बति। शर्बति। चर्बति।

कुबि आच्छादने। ४२६। कुम्बति। चुकुम्ब। कुम्बा।

लुबि तुबि अर्दने। ४२७।४२८। लुम्बति। तुम्बति। तुम्बी। लुम्बयति तुम्बयतीति चुरादिपाठात्।

---

(60) गवीति किम्? प्रतुम्पति मेषः। कर्त्तरीति किम्? प्रतुम्पति गां वृषलः। तुम्पताविति न तिङन्तानुकरणम्। अपि च धातुनिर्देशः। प्रस्तुम्पकः प्रस्तुम्पो गौः। लुङि प्रास्तुम्पीद गौः। पूर्वं धातुरुपसर्गेण युज्यते। अन्तरङ्गत्वात् सुट्। ततो द्वित्वम्। तेन लिटि प्रतुस्तुम्प गौः। सनि प्रतुस्तुम्पिषति गौः। श्तिपा निर्देशाद यङ्लुकि न। प्रतोतुम्पीति गौः।

चुबि वक्त्रसंयोगे । ४२९ । चुम्बति । चुचुम्ब । चुम्बनम् । चुम्बः ।

ष्टृभु ष्टृम्भु हिंसार्थौ । ४३०।४३१ । स्तर्भति । सिस्तर्भिषति । स्तर्भित्वा स्तब्ध्वा । सिष्टर्भयिषति । स्तृम्भति । षिभु षिम्भु इत्येके । सेभते । सिम्भते । श्रिभु श्रिम्भु इत्यन्ये । श्रेभति । श्रिम्भति ।

शुभ शुम्भ भाषणे हिंसायाञ्च । ४३२।४३३ । शोभति । शुम्भति । शुशुम्भ । शुम्भयति ।

इति परस्मैभाषा उदात्ता उदात्तेतः । अथानुनासिकान्ता आत्मनेपदिनः ।

घिणि घुणि घृणि ग्रहणे । ४३४-४३६ । घिण्णते । जिघिण्णे । जेघिण्णते । घुण्णते । जुघुण्णे । जोघुण्णते । घृण्णते । जघृण्णे । जरीघृण्णते ।

घुण घूर्ण भ्रमणे । ४३७।४३८ । घोणते । जुघुणे । जोघुण्यते । घुणः काष्ठकीटः । घोणा । घूर्णते । जुघूर्णे । घुणति घूर्णतीति तुदादिपाठात् ।

पण व्यवहारे स्तुतौ च । ४३९ । पणायति । पणायिष्यति । पणायाञ्चकार पेणे । पम्पण्यते । पण्यते । पणितम् । पण्यम् । पणः । आपणः । परिपाणः । स्तुतौ पनायति गुरुम् । आयप्रत्ययान्तादात्मनेपदं न भवति । धात्वन्तरत्वात् । अनुदात्तेत्त्वं केवले चरितार्थम् । स्तुत्यर्थेन पनिना साहचर्य्यात् स्तुत्यर्थस्यैव पणेरायप्रत्यय इति केचिन्मन्यन्ते । तेन शतस्य पणते । सहस्रस्य पणत इति भवति । अन्येतु सामान्येन स्मरन्ति । तथाच भट्टिः न चोपलेभे वणिजां पणाया इति ।

पन च । ४४० । पनायति । पनायिष्यति पनिष्यते ।

भाम क्रोधे । ४४१ । भामते । बभामे । भामिनी । भाम्यते । न्यासकारस्तु नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुकमिच्छति बम्भाम्यत इति । अन्ये त्वत इति तपरकरणान्नुकं नेच्छन्ति । बाभाम्यते । (61)

क्षमूष् सहने । ४४२ । क्षमते । चक्षमे । क्षमिता क्षन्ता । क्षमा । क्षान्तः । क्षान्तवान् । क्षाम्यतीति दिवादिपाठात् ।

---

(61) उपुस्तकेऽतावश्यकाधमर्ण्ययोर्णिनिः ( ३।३।१७० ) भामिनीति पाठः । कखमान्द्राजपुस्तकेषु तु आवश्यक इत्यादि नास्ति । माधवेन तु भामः क्रोधोऽस्या अस्तीति भामिनीति व्युत्पादितम् ।

कमु कान्तौ। ४४३। कामयते। कामयाञ्चक्रे चकमे। अचीकमत अचकमत। कामयित्वा कमित्वा कान्त्वा। कान्तः। कामुकः। कामुकी कामुका। कम्रः। कमनः। कामः।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः।

अथ परस्मैपदिन उच्यन्ते।

अण रण वण भण मण कण क्वण व्रण भ्रण शब्दार्थाः। ४४४-४५२। अणति। आणकः। अणः। अणकः। रणति। रणः। राणकः (62)। वणति। ववाण। ववणतुः। ववणुः। भणति। अभाणीत् अभणीत्। बभ्रण्यते। मणति। मणितम्। इन् मणिः। मणिकः। ईदादिप्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्य इति "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम।" कणति। चकाण। क्वणति। चक्वाण। निक्वणः निक्वाणः। व्रणति। भ्रणति।

ओणृ अपनयने। ४५३। ओणति। मा भवानोणिणत्।

शोणृ वर्णगत्योः। ४५४। शोणति। अशुशोणत्। शोणा शोणी।

श्रोणृ संघाते। ४५५। श्रोणति। श्रोणः। श्लोणृ च। ४५६। श्लोणति।

पैणृ गतिश्लेषणप्रेरणेषु। ४५७। पैणति। (63)

ध्रण शब्दे। ४५८। ध्रणति। उपदेशे दन्त्यान्तोऽयमिति प्रागस्य निर्देशो न कृतः। तस्य प्रयोजनं यङ्लुकि दन्ध्रन्तीति यथा स्यात्। अन्यथा ष्टुत्वात् दंध्रण्टीति भवति।

कनी दीप्तिकान्तिगतिषु। ४५९। कनति। कान्तः। कनकम्।

ष्टन वन शब्दे। ४६०।४६१। स्तनति। तिष्टानयिषति। अभिनिष्टानः। वनति। ववान। ववनतुः। ववनुः। अस्यैत्वाभ्यासलोपनिषेधश्चान्द्रैरुदाहृतः।

---

(62) ङ-पुस्तकेऽत्र तव कुशल (५।२।६३) इत्यण्। न सामिवचन इति (५।४।५) ज्ञापकात् स्वार्थे कन्नित्यधिकः पाठो दृश्यते।

(63) ङ-पुस्तके प्रैणृ प्रैणतीति पाठः।

वन षण संभक्तौ । ४६२।४६३ । वनति । ववान । ववनतुः । ववनुरिति । अर्थभेदात् पुनः पठ्यते । सनति । असीषणत् । सातिः सतिः सन्तिः ।

अम गत्यादिषु । ४६४ । अमति । अभ्यमीत् । आमः । आमयति । संभक्तिशब्दयोरनन्तरयोर्ग्रहणार्थमादिशब्दमिच्छन्ति ।

द्रम हम्म मीमृ गतौ । ४६५-४६७ । द्रमति । नित्यं कौटिल्ये यङ् दंद्रम्यते । दन्द्रमणः । हम्मति । जहम्म । मीमति । अमिमीमत् । मीमा ।

चमु छमु जमु झमु अदने । ४६८-४७१ । चमति । आचामति । आचामयति । चमित्वा चान्त्वा । आचान्तः । आचामः । छमति । जमति । संजमनम् । झमति । जिमिं केचित् पठन्ति । जेमति । जेमनम् ।

क्रमु पादविक्षेपे । ४७२ । क्रामति । क्राम्यति । क्रमते । क्रम्यते । प्रक्रम्यते । प्रक्रमते । प्रक्रम्यते देवदत्तः । इन्प्रत्यये बाहुल्यादुपधाया इत्त्वञ्च । क्रिमिः । क्रमः । संक्रमः । संक्रामयति । संक्रामः । वा चित्तविराग इत्यतो (६।४।९१) वेत्यनुवृत्तेर्व्यवस्थितविभाषात्वान् मितां ह्रस्व इति (६।४।९२) न भवति । (64)

इति परस्मैभाषा उदात्ता उदात्तेतः । अथ यरलवान्ता आत्मनेपदिनः ।

अय वय यय मय चय तय णय गतौ । णय रक्षणे च । ४७३-४७९ । अयते । पलायते । पलायाञ्चक्रे । पल्ययते । पल्ययितः । पलायितः । आयः । असुन् अयो लोहम् । अनोश्मायेत्यादिना ( ५।४।९३ ) अच् । कालायसम् । वयते । ववये । वयः । नौवयेत्यादिना (४।४।९१) यत् । वयसा तुल्यो वयस्यः । ययते । येये । मयते मेये । चयते । चेये । तयते । तेये । नयते । नेये ।

दय दानगतिरक्षणहिंसादानेषु । ४८० । दयते । सर्पिषो दयते । "दयाञ्चक्रे न राक्षसः ।" दया । दयालुः ।

रय गतौ । ४८१ । रयते । रेये । रयितम् । रयः ।

---

(64) व्यवस्थितविभाषेति । तेन प्रियसुहृदि विभीषणे श्रियं संक्रमय्य वैरिण इत्यादि प्रयोगः । धुर्यान् विश्रामयतीत्यादावपि व्यवस्थितविभाषा ।

जयी तन्तुसन्ताने। ४८२। जयते। जयाञ्चक्रे। जयिता। जतः। जतवान्। निरुतम्।

पूयी विशरणे दुर्गन्धे च। ४८३। पूयते। पुपूये। पूतः। पूतिः। पूयः।

क्नूयी शब्दे उन्दे च। ४८४। क्नूयते। चुक्नूये। क्नोपयति। चेलक्नोपम्। क्नूतः। क्नूतवान्।

क्ष्मायी विधूनने। ४८५। क्ष्मायते। चक्ष्माये। क्ष्मापयति। क्ष्मातः। क्ष्मातवान्। क्ष्मातिः।

स्फायी ओप्यायी वृद्धौ। ४८६।४८७। स्फायते। पस्फाये। स्फायितञ्चीत्यादिना (उण्, २।१७०) रक्। स्फारः। स्फारयति। स्फीतः। स्फीतवान्। स्फातिशब्दादर्शआद्यजन्तात् स्फाता स्तण्डुलाः। आप्यायते। आपिप्ये। आप्यायि। आप्यायिष्ट। पीना यवाः। आपीनोऽन्धुः। आपीनमूधः। आपेपीयते।

तायृ सन्तानपालनयोः। ४८८। तायते। तताये। अतायि। अतायिष्ट।

शल चलनसंवरणयोः। ४८९। शलते। शेले। शालः। कृशृशलिकलिगर्दिभ्योऽभच् (उण् ३।४०२) शलभः। शल्कम्। इण्भीकापाशल्यभिमर्चिभ्यः कन्। (उण्, ३।३२३)। शालूकम्। बहुलवचनादालुच् शलालु। वलाकादयश्चेत्याकः (उण्, ४।४५४)। शलाका। शलतीति गतौ वक्ष्यते।

वल वल्ल संवरणे। ४९०।४९१। वलते। ववले। "ववलिरे वलिरेचितमध्यमा।" वलेर्वलादेश इप्रत्ययश्च। वलिः। वली। वल्लते। वल्लिः। वल्ली। (65)। रासिवल्लिभ्यामभच् (उण्, ३।४०५)। वल्लभः।

मल मल्ल धारणे। ४९२। ४९३। मलते। मेले। घञर्थे कः। मलम्। ज्योत्स्नेत्यादिना निपातनात् (५।२।११४) मलिनम्। माला। कर्मणि स्वभावाद् घञन्तोऽपि स्त्रियां वर्त्तते। संज्ञायां क्वुन्। गौरादित्वान् ङीष्। आमलकी। मल्लते। ममल्ले। मल्लः। मल्लिका। संज्ञायां क्वुन् (उण्,२।१९०)।

भल भल्ल परिभाषणहिंसादानेषु। ४९४।४९५। भलते। बभले।

(65) ङपुस्तके अजन्तत्वादगौरादिपाठान् ङीषि वल्लीति पाठः।

भालूकः । उलूकादयश्चेति । (उण् ४।४८०)। भल्लते । बभल्ले । भल्लूकः । कल शब्दसंख्यानयोः । ४९६ । कलते । चकले । कालः ।

कल्ल अव्यक्ते शब्दे । ४९७ । कल्लते । कल्लः । ओलच् कल्लोलः ।

तेवृ देवृ देवने । ४९८।४९९ । तेवते । अतितेवत् । देवते । अदिदेवत् । आदेवकः ।

शेवृ षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेचने । ५००—५०६ । शेवते । अशिशेवत् । सेवते । सिषेवे । असिषेवत् । गेवते । ग्लेवते । पेवते । मेवते । म्लेवते । अमिम्लेवत् । सेवृ खेवृ प्लेवृ इत्येके ।

रेवृ प्लेवृ गतौ । ५०७ । ५०८ रेवते । अरिरेवत् । रेवा । प्लेवते । पूर्वकौ रेवृप्लेवौ पवर्गे पठितौ स्पर्शान्तौ । इमौ तु यरलवान्तवर्गे पठितौ ईषत्पृष्टौ वेदितव्यौ । एवं पेवतिमेवती च वेदितव्यौ । प्लव इत्येके । प्लवते । प्लेवे । पव इत्यन्ये । पवते । पेवे ।

इति एते आत्मनेभाषा उदात्ता अनुदात्तेतः । अथ परस्मैपदिनः यरलवान्ताः ।

मव्य बन्धने । ५०९ । मव्यति । ममव्य ।

षूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः । ५१०।५१२ । सूर्क्ष्यति । सुषूर्क्ष्य । ईर्क्ष्यति । ईर्क्ष्याञ्चकार । ईर्ष्यति ईर्ष्याञ्चकार । ईर्षियिषति । ईर्षियियिषति । ईर्ष्या । (66)

हय गतौ । ५१३ । हयति । हयः ।

शुच्य अभिषवे । ५१४ । शुच्यति । चुच्य इत्यपि पठन्ति । ५०७ ।

हर्य गतिकान्त्योः । ५१५ । हर्यति । जहर्य । हर्या । अकारः ।

अलँ वारणपर्याप्तिभूषणेषु । ५१६ । अस्यानुनासिकः स्वरितोऽकार इत्संज्ञक इतीच्छन्ति । अतोऽयमुभयपदी । यरलवान्तप्रकरणानुरोधेन अयमत्रोभयतोभाषोऽपि पठितः । तद्द्योतनायानुनासिक उच्चार्यते । अलति अलते । क्वुन् । अलकम् । अलका कुवेरनगरी । इण् अलिः । अली । ईकन् अलीकम् ।

---

(66) क्विपि सूर्ट् सूर्चौ । ईर्ट् । ईर्ट् ।

ञिफला विशरणे। ५१७। फलति। पफाल। फुल्तमस्य फलितमस्य। प्रफुल्तः प्रफलितः। पम्फुल्यते। पम्फुलः। फुल्ता लता। उत्फुल्लम्। संफुल्लम्। उपसंख्यानात्।

मील स्मील च्मील निमेषणे। ५१८-५२०। मीलति। अमिमीलत् अमीमिलत्। स्मीलति। च्मीलति। श्मील इत्येके। श्मीलति।

पील प्रतिष्टम्भे। ५२१। पीलति। पीलुः। मृगय्वादित्वात् कुः।

णील वर्णे। ५२२। नीलति। प्रणीलति। नीलम्। नीलात् प्राण्योषध्योरिति ङीष्। नीली धेनुः। नीली ओषधिः। वा संज्ञायाम् (४।१।४२ वा)। नीला नीली वा दासी।

शील समाधौ। ५२३। शीलति। शीलम्। शीले भवा वृत्तिः शैली। शील उपधारणे चुरादौ। शीलयति।

कील बन्धे। ५२४। कीलति। कीलम्।

कूल आवरणे। ५२५। कूलति। कूलम्।

शूल रुजायां सङ्घाते च। ५२६। शूलति। शूलम्।

तूल निष्कर्षे। ५२७। तूलति। तूलम्। तूलिका।

पूल संघाते। ५२८। पूलति। पूलः। पञ्चपूली।

मूल प्रतिष्ठायाम्। ५२९। मूलति। मूलम्। नौवय इत्यादिना (४।४।९१) यत्। मूल्यम्। मूले भवो मौलः।

फल निष्पत्तौ। ५३०। फलति। फलितम्। फलम्।

चुल्ल हावकरणे। ५३१। चुल्लति। चुचुल्ल। चुल्लः। चुल्लिः चुल्ली।

फुल्ल विकसने। ५३२। फुल्लति। प्रफुल्लः। प्रफुल्लितः।

चिल्ल शैथिल्ये भावकरणे च। ५३३। चिल्लति। चिचिल्ल। चिल्लःपक्षी।

तिल गतौ। ५३४। तेलति। तिलः। क्वुन्। तिलकः।

वेल्ल चेल्ल केल्ल खेल्ल च्वेल्ल वेल्ल चेल्ल चलने। ५३५-५४१। वेलति। विवेल। अविवेलत्। वेला। चेलति। चेलम्। गौरादि ङीष्। पचादिषु चेलडिति पाठाद्वा स्त्रियां ङीप्। चेली। केलति। केलम्। केला। केलिः।

कण्ड्वादित्वाद् यक्। केलायति। केलायितम्। खेलति। खेलयति। खेला। खेलायति (67)। क्ष्वेलति। वेल्लति। चेल्लति।

पेलृ फेलृ शेलृ गतौ। ५४२-५४४। पेलति। अपिपेलत्। फेलति। फेला। शेलति।

खल स्खल सञ्चलने। ५४५ ५४६। खल संशये च। खलति। खलः। स्खलति। चस्खाल। स्खलितम्।

गल अदने। ५४७। गलति। जगाल।

सल गतौ। ५४८। सलति। सालः। सलिलम्। इलच्।

दल विदारणे। ५४९। दलति। ददाल। दालः। दलनम्। दाड़िमम्। (68) कुद्दालः। ()

श्वल श्वल्ल आशुगमने। ५५०। ५५१। श्वलति। अश्वालीत्। श्वल्लति। शश्वल्ल। अश्वल्लीत्।

खोरृ गतिप्रतिघाते। ५५२। खोरति। अचुखोरत्।

खोल्ट इत्यप्येके। ५५३। खोलति। खोलः।

धोर्ऋ गतिचातुर्य्ये। ५५४। धोरति। अदुधोरत्। चलनशब्दार्थाद-कर्मकाद् युच्। (३।२।१६८)। आधोरणः। धोरितम्।

त्सर छद्मगतौ। ५५५। त्सरति। तत्सार। तत्सरतुः। तत्सरुः। अत्सारीत्। त्सरुः खड्गादि मुष्टिः। आकर्षादित्वात् त्सरुकः।

क्मर हूर्च्छने। ५५६। क्मरति। चक्मार। अक्मारीत्।

अभ्र वभ्र मभ्र चर गत्यर्थाः। ५५७-५६०। अभ्रति। आनभ्र। अभ्रयते। (70) अभ्रम्। वभ्रति। वभ्रयते। मभ्रयति। मभ्रयते। चरति

---

(67) कण्ड्वादिभ्यो यगिति (३।१।२७) स्वार्थे यकि केलायति खेलायतीति सिद्धम्।

(68) दालशब्दाद् घञन्तादिमच्।

(69) कुं दालयतीति कुद्दालः। पृषोदरादिरिति माधवः।

(70) अभ्रात इत्यनन्तरं चपुस्तके अभ्यत इत्येके इति च पाठोऽधिकः। तत्र कर्मणि अभ्राते इत्यत्र (८।४।६४) हलो यमां यमि लोप इत्यनेन रेफलोप इति एके मन्यन्ते। अन्ये त्वत्र यमां यमीति यथासंख्यमेवेति गृह्णन्ति। तेनादित्यं हविरित्यादावेव लोपः। नतु माहात्म्य्र तादात्म्यमित्यादौ इति वदन्ति।

भक्षणेऽपि पठ्यते । चरति । अचारीत् । चरितम् । चरित्वम् । उदश्चरः सकर्मकादिति ( १।३।५३) तङ् । गेहमुच्चरते । समस्तृतीयायुक्तात् ( १।३।५४ ) अश्वेन सञ्चरते । · चञ्चूर्य्यते । चञ्चूर्त्ति चञ्चुरीति । आचरितव्यम् । आचरणीयम् । आचार्य्यः । वा चरिचलीत्यादिना द्वित्वमागागमश्च चराचरः । व्रत इति (३।२।८०) णिनिः । ब्रह्मचारी । सब्रह्मचारी ।

ष्ठिवु निरसने । ५६१ । ष्ठीवति । ष्ठिवेरभ्यासस्य तो वेति तन्त्रान्तरीयम् । टिष्ठेव । तिष्ठेव । ष्ठ्यूत्वा ष्ठेवित्वा । मधुलिट् ष्ठीवति (71) । इवन्तत्वादिड्विकल्पः । तिष्ठेविषति । तिष्ठ्यूषति । निष्ठेवनम् । निष्ठीवनम् ।

जि जये । ५६२ । जयति । विजयते । पराजयते । जिगाय । जेता । जापयति । जिगीषति । जयः । जय्यः । जेयः । जापः । मारजित् । जिदृक्षीति (३।२।१५७) इनिः । जयी । क्वरप् जित्वरः । खल् सुजयः । उत्तरधातुसादृश्यानुरोधेनाजन्तोऽप्ययमत्र निर्द्दिश्यते ।

जीव प्राणधारणे । ५६३ । जीवति । अजिजीवत् अजीजिवत् । जीविका । जीविकाकृत्य कथयति । जीवनम् । जीव्यम् ।

पीव मीव तीव णीव स्थौल्ये । ५६४—५६७ । पीवति । पिपीव । पीवरम् । पीवा । पीवित्वा । मीवति । तीवति । नीवति । प्रणीवति ।

च्चिवु निरसने । ५६८ । च्चेवति ।

उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम् । ५६९—५७३ । ऊर्वति । ऊः । उरौ । उरः । ऊर्णः । ऊर्णवान् । ऊर्णिः । तूर्वति । थूर्वति । दूर्वति । दूर्वा । धूर्वति । धूः । धुरौ । धुरः । तद्वहतीत्यर्थे धुरो यड्ढकौ (४।४।७७) । धुर्य्यः । धौरेयः । सर्वा चासौ धूश्चेति सर्वधुरा । तां वहतीति खः । सर्वधुरीणः । योगविभागादुत्तरधुरीणः । एकधुराल्लुक् च (४।४।७९) । एकधुरः एकधुरीणः ।

गुर्वी उद्यमने ५७४ । गूर्वति । । गूः । गुरौ । गुरः । गूर्णः । गूर्णवान् ।

मुर्वी बन्धने । ५७५ । मूर्वति । मूर्वा । तस्य विकारो मौर्वी । मूः । मुरौ । मूर्णम् ।

---

(71) मधुलिट् ष्ठीवतीति ङः सि धुड़िति ( ८।३।२९ ) धुट् नेति प्रदर्शनार्थम् । ष्ठीवतेः सत्वाभावात् ।

पुर्व पर्व मर्व पूरणे । ५७६—५७८ । पूर्वति । पर्वति । मर्वति ।

चर्व अदने । ५७९ । चर्वति । चर्वा । चर्व्वितम् ।

भर्व हिंसायाम् । ५८० । भर्वति ।

कर्व खर्व गर्व दर्पे । ५८१-५८३ । कर्वति । खर्वति । गर्वति । गर्वः । पूर्वका: कर्वादयः स्पर्शान्ताः । अमी त्वीषत्पृष्टान्ता इति पुनश्च पठ्यन्ते ।

अर्व शर्व षर्व हिंसायाम् । ५८४—५८६ । अर्वति । आनर्व । गन्धर्व इति शकन्ध्वादित्वात् पररूपम् । शर्वति । शर्वः । शर्वाणी । सर्वति । सर्वः । सर्व्वस्मै ।

इवि व्याप्तौ । ५८७ । इन्वति । प्रेन्वति । इन्वाञ्चकार । णत्वविधौ नुमोऽनुस्वारोपलक्षणार्थत्वं द्रष्टव्यमित्युक्तत्वात् प्रेन्वनमिति नुम्व्यवाये णत्वं न भवति ।

पिवि मिवि णिवि स्रंसने । ५८८।५९० । पिन्वति । पिपिन्व । पिन्वः । मिन्वति । निन्वति । प्रणिन्वति । निनिन्व ।

हिवि दिवि धिवि जिवि प्रीणनार्थाः । ५९१-५९४ । हिन्वति । जिहिन्व । दिन्वति । दिन्वते । धिनोति । धिनुतः । जिन्वति । जिजिन्व ।

रिवि रवि धवि गत्यर्थाः । ५९५।५९७ । रिण्वति । रण्वति । रण्वा । धन्वति । दधन्व । कनिन् । धन्वा मरुदेशः ।

कृवि हिंसाकरणयोः । ५९८ । कृणोति । चकृण्व ।

मव बन्धने । ५९९ । मवति । ममाव । मेवतुः । मेवुः । मूः । मुवौ । मुवः । यङ्लुगन्तात् क्विप् । मामूः ।

अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छा-दीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । ६०० । अवति । आव । ऊः । उवौ । उवः । अविषः । ऊतिः ।

इति एते परस्मैभाषा उदात्ता उदात्तेतः । उदात्तत्वमिदं जयतिवर्जम् । तस्यानुदात्तत्वात् ।

धावु गतिशुद्ध्योः । ६०१ । धावति धावते । धावित्वा धौत्वा । धौतः पटः । कथं गतौ धावितौ धावितवानिति ? यस्य विभाषेति (७।२।१५)

निषेधस्यानित्यत्वादिटोऽनित्यता । वीजञ्च क्रतिचृतिनृतीनामीदित्करणम् । तद्धि श्वीदितो निष्ठायामिति (७।२।१४) निषेधार्थं क्रियते । यस्य विभाषेति (७।२।१५) निषेधस्यानित्यत्वे तु तेनैव सिद्धत्वादनर्थकं तत् स्यात् । वृषादित्वात् कलच् । बाहुल्यादुपधाह्रस्वत्वम् । धवलः । धवला । "नीता येन निशा शशाङ्कधवला ।" ण्वुल् धावकः । ल्युट् धावनम् । क्तिन् धौतिः ।

उभयतोभाष इति उभयपदो भण्यते । स्वरितेत्त्वात् स्वरितेदिति । स्वरित इत्संज्ञकोऽस्येत्यर्थः । तस्य प्रयोजनं स्वरितञितः कर्त्रभिप्राये क्रियाफल इति (१।३।७२) आत्मनेपदम् । हिक्कादिषूभयपदिष्वयं न पठ्यते । तेषां कवर्गान्तप्रकरणानुरोधेन । अस्य चान्तःस्थान्तप्रकरणानुरोधात् ।

अथ ऊष्मान्ता आत्मनेपदिनः कथ्यन्ते ।

धुक्ष धिक्ष संदीपनक्लेशनजीवनेषु । ६०२।६०३ । धुक्षते । दुधुक्षे । संधुक्षणम् । धिक्षते ।

वृक्ष वरणे । ६०४ । वृक्षते । वृक्षः ।

शिक्ष विद्योपादाने । ६०५ । शिक्षते । शिक्षा । शैक्षः । छत्रादिभ्यो णः (४।४।६२) । शैक्षा ।

भिक्ष याच्ञायां लाभेऽलाभे च । ६०६ । भिक्षते । भिक्षा । भिक्षुः । भिक्षासमूहे भिक्षादिभ्योऽण् (४।२।३८) । भैक्षम् ।

क्लेश व्यक्तायां वाचि । ६०७ । क्लेशते । चिक्लेशे ।

दक्ष वृद्धौ शीघ्रार्थे च । ६०८ । दक्षते । दक्षः । दक्षिणम् । द्रुदक्षिभ्यामिनन् (उण्, २।२०८) । दक्षिणा ।

दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । ६०९ । दीक्षते । दीक्षा । दीक्षितः ।

ईक्ष दर्शने । ६१० । ईक्षते । ईक्षाञ्चक्रे । ईक्षणम् ।

भाष व्यक्तायां वाचि । ६११ । भाषते । बभाषे । भाषा । ण्यत् भाष्यम् । णिनिः मितभाषी । भाषितम् ।

पर्ष वर्ष स्नेहने । ६१२।६१३ पर्षते । वर्षते । ववर्षे ।

श्लेषृ अन्विच्छायाम् । ६१४ । श्लेषते । अशिश्लेषत् ।

ईष गतिहिंसादानेषु । ६१५ । ईषते । ईषाञ्चक्रे । अकारः ईषा । मनस ईषा मनीषा । पृषोदरादिः । व्रीह्यादित्वादिनिः मनीषी । घञ् प्रेषः । ण्यत् प्रेष्यः । ण्वुल् ईषिका । ईष्व इति वन्नन्तस्य निपातनमस्य । ईषतीत्यत्र वक्ष्यते ।

प्रेषृ यत्ने । ६१६ । प्रेषते । अपिप्रेषत् ।

येषृ प्रयत्ने । ६१७ । येषते । अयियेषत् ।

जेषृ णेषृ एषृ ह्रेषृ गतौ । ६१८—६२१ । जेषते । अजिजेषत् । नेषते । प्रणेषते । प्रनिनेषते । एषते । अध्येषते अन्वेषते । मा भवानेषिषत् । ह्रेषते । "ह्रेषा वाजिध्वनौ स्त्रियाम्" ।

रेषृ हेषृ अव्यक्तशब्दे । ६२२।६२३ । रेषते । अरिरेषत् । हेषते । जिहेषे । अजिहेषत् । उपजिहेषिषते । हेषा ह्रेषा च निःस्वन इत्यमरः । (72)

कासृ शब्दकुत्सायाम् । ६२४ । कासते । कासाञ्चक्रे । कासो रोगः । रोगाख्यायां ण्वुल् बहुलम् (३।३।१०८) । उत्कासिका ।

भासृ दीप्तौ । ६२५ । भासते । बभासे । अबीभसत् अबभासत् । भास्वरः । भञ्जभासमिदो घुरच् (३।२।१६१) । भासुरम् । ग्रह्यादिणिनिः । उद्भासी । क्विप् भाः भासौ भासः । आत्मनेपदार्थमकारानुबन्धे कर्त्तव्य ऋकारानुबन्धकरणमस्य ऋकारानुबन्धप्रकरणात् । एवञ्चानुबन्धान्तरकरणञ्च न प्रकरणानुरोधेन ।

णासृ रासृ शब्दे । ६२६।६२७ । नासते प्रणासते । नासा । नासिका । अञ् नासिकाया इत्यच् (५।४।११८) नसादेशश्च । गोनसम् । खुरखराभ्याञ्च नस् वक्तव्यः । खुरणाः खरणाः । अच्प्रत्ययोऽपीष्यते । खुरणसः खरणसः । उपसर्गाच्चेत्यच्—(५।४।११९) नसादेशौ । प्रणसः । वेर्ग्रो वक्तव्य इति ग्रभावे विग्रस्तु गतनासिकः । केचिन्नासिकापर्य्याये नसाशब्दमिच्छन्ति । तथाच वराहनरपुरुषप्रकाशे नसाशब्दः प्रयुक्तः । भट्टिकाव्येपि विनसा हतबान्धवेति दृश्यते । न चासावुपसर्गाच्चेति (५।४।११९) नसादेशे सिध्यति । वेर्ग्रो वक्तव्य इति ग्रादेशेन बाधितत्वात् । (73) रासते । ररासे ।

---

(72) हेषा ह्रेषेति अश्वशब्दे । अमरेऽश्वप्रकरणात् ।

(73) मतान्तरे भट्टिप्रयोगे विगतनासिकाशब्दे कर्मधारयः । नस उपलक्षणे तृतीया ।

णस कौटिल्ये । ६२८ । नसते । प्रणसते । नेसे । अनीनसत् । विनसः । विनास ।

भ्यस भये । ६२९ । भ्यसते । बभ्यसे ।

आङ् शसि इच्छायाम् । ६३० । आशंसते । आशशंसे । आशंस्यते । आशंसिता । आशंसितम् । आशंसा । आशंसुः । प्रशंसति प्रशस्यते प्रशस्त इति शन्स सुखावित्यस्य ।

ग्रसु ग्लसु अदने । ६३१ । ६३२ । ग्रसते । जग्रसे । ग्रसित्वा ग्रस्त्वा । ग्रस्तम् । पिण्डग्रः । ग्लसते ।

ईह चेष्टायाम् । ६३३ । ईहते । ईहाञ्चक्रे । ऐहिष्ट । ईहा ।

बहि महि वृद्धौ । ६३४ । ६३५ । बंहते । बंहेर्नलोपश्चेत्युप्रत्ययः (उण्, १।२९) । बहुः । भूयान् । भूयिष्ठः । मंहते । महान् । वर्त्तमाने पृषद्बृहन् महदिति (उण्, २।२२) अतिप्रत्ययः । महिष्ठो महीयान् महिमा ।

अहि गतौ । ६३६ । अंहते । आनंहे । आंहिष्ट । अञ्जिहिषिते । नन्द्रा । इति (६।२।३) निषेधाद् हिशब्दस्य द्वित्वम् । अंहः ।

गर्ह गल्ह कुत्सायाम् । ६३७ । ६३८ । गर्हते । जगर्हे । जागर्ह्यते । गल्हते । जागल्ह्यते ।

वल्ह प्राधान्ये । ६३९ । वल्हते । ववल्हे । अवल्हिष्ट । अवल्हिध्वम । अवल्हिढ्वम् ।

वर्ह वल्ह परिभाषणहिंसादानेषु । ६४०।६४१ । वर्हते । ववर्हे । वर्हिणः । बर्हम् । वर्ही । प्रवर्हः । वल्हते । वावल्ह्यते ।

प्लिह गतौ । ६४२ । प्लेहते । पिप्लिहे । प्लीढा । प्लीहानौ ।

वेहृ जेहृ वाहृ प्रयत्ने । ६४३-६४५ । वेहते । अविवेहत् । वेह्यते । जेहते । वाहते । वाढं भृशम् । वाहितम् ।

माहृ माने । ६४६ । माहते ।

द्राहृ निद्राक्षये । ६४७ । द्राहते । अदद्राहत् ।

काशृ दीप्तौ । ६४८ । काशते । चकाशे । अचकाशत् । आकारोपध ऋदित्प्रकरणादिहायं निर्दिश्यते । काश्यते इति दिवादिपाठात् ।

ऊह वितर्के । ६४९ । ऊहते । ऊहाञ्चक्रे । समूहति समूहते । समुह्यते । ऊहः । समूहः । समूह्य । सामूहिकः । अध्यात्मादित्वात् ठञ् ।

गाहू विलोड़ने । ६५० । गाहते । जगाहे । गाहिष्यते घाक्ष्यते । अगाहिष्ट अगाढ़ । विगाढ़ा विगाहिता । विगाढ़म् । विगाहः ।

ग्रहू ग्रहणे । ६५१ । गर्हते । जग्रहे । गर्हिता गर्ढा । ग्रढः । ग्रढ़िः । क्यप् ग्रह्यम् । ग्रहाः । ग्रहम् । गेहे क इति (३।१।१४४) ग्रह्णातेः कविधानं तस्यैव ग्रहमिति यथा स्यादिति द्योतयितुम् । ग्रहेर् मा भूदिति ।

ग्लह इत्यप्येके । ६५२ । तथा चाक्षेषु ग्लह इत्यत्र (३।३।७०) ग्लहिः प्रकृत्यन्तरमस्तीत्युक्तम् । ग्लहते । जग्लहे । ग्लहः ।

घुषि कान्तिकरणे । ६५३ । घुंषते । जुघुंषे । घुंष्यते । उत्तरधातु-साधर्म्यानुरोधेनायमिह निर्दिश्यते ।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः । अथ परस्मैपदिनः ।

घुषिर् शब्दार्थः । ६५४ । घोषति । जुघोष । अघुषत् अघोषीत् । घुष्टम् । घुषिर् अविशब्दन इति चुरादौ । तस्य घोषयति ।

अक्षू व्याप्तौ संघाते च । ६५५ । अक्षति अक्ष्णोति । अक्षिता अष्टा । अष्टः । अष्टवान् । अक्षित्वा अष्ट्वा ।

तक्षू त्वक्षू तनूकरणे । ६५६ । ६५७ । तक्षति तक्ष्णोति । तक्षिता तष्टा । तक्षित्वा तष्ट्वा । तष्टम् । त्वक्षति । तत्वक्ष । त्वक्षिता त्वष्टा । त्वक्षित्वा त्वष्ट्वा । त्वष्टम् ।

उक्ष सेचने । ६५८ । उक्षति । उक्षाञ्चकार । उक्षा । प्रोक्षणम् । अभ्युक्षणम् ।

रक्ष पालने । ६५९ । रक्षति । रिरक्षिषति । रारक्ष्यते ।

णिक्ष चुम्बने । ६६० । निक्षति । णोपदेशप्रयोजनमुक्तम् प्राक् । प्रणिक्षति ।

तृक्ष ष्टृक्ष णक्ष गतौ । ६६१-६६३ । तृक्षति । ततृक्ष । तृक्षः । स्तृक्षति । तिष्टृक्षयिषति । (74) नक्षति ।

(74) अणिजन्ते तु तिस्तृक्षिषतीति । स्तौतिण्योरेव षण्यीति (८।३।६१) नियमात् षत्वाभावः ।

वक्ष रोषे । ६६४ । वक्षति । ववक्ष । वक्षः क्रोड़म् ।

म्रक्ष संघाते । ६६५ । म्रक्षति ।

मक्ष इत्यप्येके । ६६६ । मक्षति । मक्षिका ।

तक्ष त्वचने । ६६७ । त्वचनं संवरणम् । तक्षति । तक्षिता ।

पक्ष परिग्रह इत्यप्येके । ६६८ । पक्षति । पक्षः । पक्षणम् ।

षूर्क्ष अनादरे । ६६९ । सूर्क्षति । सुषूर्क्ष । सूर्क्षणम् । (75)

काक्षि वाक्षि माक्षि काङ्क्षायाम् । ६७०-६७२ । काङ्क्षति । चकाङ्क्ष । काङ्क्षा । वाङ्क्षति । पृषोदरादित्वात् ह्रस्वे "तत्सन्धिः पुंसि वङ्क्षणः ।" माङ्क्षति ।

द्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते च । ६७३-६७५ । द्राङ्क्षति । दद्राङ्क्ष । ध्राङ्क्षति । ध्वाङ्क्षति । ध्वाङ्क्षः ।

चूष पाने । ६७६ । चूषति । चुचूष ।

तूष तुष्टौ । ६७७ । तूषति । तूषा । तूषः ।

पूष वृद्धौ । ६७८ । पूषति । पूषितम् । पूषः ।

मूष स्तेये । ६७९ । मूषति । मूषकः । मूषा । मूषिका ।

षूष प्रसवे । ६८० । सूषति । सुषूष ।

यूष हिंसायाम् । ६८१ । यूषति । यूषः । "पीते यूषिणि निरामयः ।" (76)

जूष च । ६८२ । जूषति ।

भूष अलङ्कारे । ६८३ । भूषति । बुभूष । भूषते कन्या स्वयमेव । भूषणम् ।

ऊष रुजायाम् । ६८४ । ऊषति । ऊषाञ्चकार । ऊषः । ऊषरम् ।

ईष उञ्छे । ६८५ । ईषति । ईषाञ्चकार । ईषा । प्रेष्यः । प्रेषः ।

कष शिष जष झष शष वष मष रुष रिष हिंसार्थाः । ६८६-६९४ । कषति । कषिष्यति । समूलकाषं कषति । निमूलकाषं कषति । सर्वंकषः ।

---

(75) अत्र भट्टोजिः—"अनादरे इति तु क्वाचित्कोऽपपाठः ।" इति । अवज्ञावहेलनमसूर्क्षणमित्यमरः । सूर्क्षणमादरः ।

(76) यूषो मांसरसविशेष इति माधवः ।

कष्टम् । कषितम् । निकषः । पतृकाषी । शेषति । शेष्टा । जषति । झषति । झषो मीनः । वषति । मषति । रोषति । रोषिता रोष्टा । रुष्यतीति दिवादिपाठात् । रेषति । रेषिता रेष्टा ।

भष भर्त्सने । ६९५ । शब्दकर्मकः । भषति । भषकः श्वा । शब्दः शब्दविशेषः कुक्कुरध्वनिः कर्म क्रियास्येति शब्दकर्मकः । सोऽप्यस्यार्थः ।

उष दाहे । ६९६ । ओषति । उवोष ओषाञ्चकार । ऊष्मा । बहुलवचनाद् दीर्घः ।

जिषु विषु मिषु सेवने । ६९७-६९९ । जेषति । जेषिता । जेषित्वा जिषित्वा जिष्ट्वा । वेषति । मेषति । मेषः । अच् ।

पुष पुष्टौ । ७०० । पोषति । पोषिता । अपोषीत् । पोषितः । पुष्णाति पुष्यतीति गणान्तरपाठात् ।

श्रिषु श्लिषु प्रुषु प्लुषु दाहे । ७०१-७०४ । श्रेषति । श्रेषित्वा श्रिषित्वा श्रिष्ट्वा । प्रश्लेषति । प्राश्लेषीत् । प्रोषति । प्लोषति ।

पृषु वृषु मृषु सेचने । ७०५-७०७ । पर्षति । पृष्टम् । पृषितमित्यौणादिकम् । वर्षति । वृष्टिः । अज्विधौ भयादीनामुपसंख्यानमित्यच् । वर्षम् । वृषभो वर्षणादिति भाष्यलेखनाद् वर्षणमिति च । मृषु सहने च । मृष्यतीति दिवादित्वात् । मर्षति । मर्षित्वा मृषित्वा ।

घृषु संघर्षे । ७०८ । घर्षति । जघर्ष । घृष्टम् ।

हृषु अलीके । ७०९ । हर्षति । हृषिताः केशा हृष्टा वा । हृष तुष्टाविति दिवादौ हृष्यति ।

तुस ह्रस ह्लस रस शब्दे । ७१०-७१३ । तोसति । तुतोस । ह्रसति । ह्रसितम् । ह्रस्वः । ह्लसति । रसति । रसितम् मेघगर्जनम् ।

लस श्लेषणक्रीड़नयोः । ७१४ । लसति । विलासी । विलासः ।

घस्लृ अदने । ७१५ । घसति । घस्ता । घस्तम् । घस्मरः ।

जर्ज चर्च झर्झ परिभाषणसन्तर्जनयोः । ७१६-७१८ । जर्जति । जर्जन्ती । चर्चति । झर्झति । चर्च झर्झ इत्येतौ तुदादावपि पठ्येते । इह तु स्वरार्थं पठितौ । अर्थानुरोधाच् चोषान्तवर्गेऽपि एते पठ्यन्ते ।

पिसृ पेसृ गतौ । ७१९।७२० । पेसति । अपिपेसत् । पिसः । पेस्वरः । पेसति । पेपेस्यते ।

हसे हसने । ७२१ । हसति । जहास । अहसीत् । हसः हासः । (77) स्वनहसोर्वेत्येव् वा (६।३।६२) ।

कस गतिशासनयोः । ७२२ । कसति ।

णिश समाधौ । ७२३ । नेशति । प्रणेशति । निशा । सप्तमीबहुवचने निशासु निट्सु निच्शु । (78)

मिश मश शब्दे रोषकृते च । ७२४।७२५ । मेशति । मिमेश । मशति । मशकः । क्वुन् ।

शव गतौ । ७२६ । शवति । शवः । शावकः । शावः । क्विप् शौः । शकारवत्प्रकरणादयमत्र निर्दिश्यते ।

शश प्लुतगतौ । ७२७ । शशति । शशाश शेशतुः शेशुः । शशः मृगभेदः । तद्योगाच् शशी चन्द्रः ।

शसु हिंसायाम् । ७२८ । शसति । विशशास । विशशसतुः । विशशसुः । विशशसिथ । न शसदद (६।४।१२६) वादिगुणानामित्येत्वाभ्यासलोपप्रतिषेधः । तकिशसि (३।१।९७) इति यत् शस्यम् । शस्त्रम् । हन्त्यर्थाश्चेति चुरादिगणसूत्रात् णिच् । शासयति । शास्यम् ।

शंसु स्तुतौ । ७२९ । कथने च । शंसति । नृशंसः क्रूरः । ब्राह्मणाच्छंसी ऋत्विक् । ब्राह्मणाद् वेदभागादाकृष्य शंसति स्तौतीति ब्राह्मणाच्छंसीत्युपसंख्यानादलुक् । (६।३।२ वा) प्रशंसा । शस्तम् । शंस्यम् । शस्यम् ।

चह परिकल्कने । ७३० । चहति । अचहीत् ।

मह पूजायाम् । ७३१ । महति । ममाह । मही । गौरादित्वात् ।

रह त्यागे । ७३२ । रहति । रराह । रहः । रहयतीति चुरादिपाठात् ।

रहि गतौ । ७३३ । रंहति । ररंह । रंहः । असुन् ।

---

(77) हमूमदार्यै यशसा मया पुनर्द्विषां हसैर्द्रुतपथः सितीकृत इति नैषधे ।

(78) व्रश्चभ्रस्जेत्यादौ धातुसाहचर्याद् धातोरेव (8.2.36) शकारस्य षत्वम् । प्रातिपदिकानां शकारस्य तु जश्त्वमिति मतेन निच्शु ।

तृह तृहि तृह तृहि वृह वृहि वृहौ । ७३४-७३९ । तर्हति । ततर्ह । तृंहति । ततृंह । दर्हति । ददर्ह । तृंहति । तृंह्यते । दतृंह । वर्हति । वर्हिः । वृहि शब्दे च । वृंहति । वृंह्यते । ववृंह । वृंहितम् । वृंहणम् । परिवृढः ।

तुहिर् दुहिर् अर्दने । ७४०।७४१ । तोहति । अतोहीत् अतुहत् । दोहति । अदुहत् अदोहीत् ।

तुहिर् उहिर् इत्येके । ७४२ । तोहति । ओहति । औहीत् औहत् ।

अर्ह पूजायाम् । ७४३ । अर्हति । अर्हति । आनर्ह । अर्हा । अर्हः ।

इति परस्मैभाषा उदात्ता उदात्तेतः । इति ऊष्मान्तान् परस्मैपदिनः परिसमाप्य अङ्विधौ संकलिता द्युतादय आत्मनेपदिन उपदिश्यन्ते ।

द्युत दीप्तौ । ७४४ । द्योतते । दिद्युते । अद्युतत् अद्योतिष्ट । द्युतित्वा द्योतित्वा । दिद्युतिषते । दिद्योतिषते । द्योतितमनेन द्युतितमनेन । देद्युत्यते । द्योतनः । द्युतिः । द्युतिगमिजुहोतीनां द्वे चेति (३।२।१७८ वा ) क्विप् । द्विर्वचनम् । दिद्युत् । भ्राजभासेति (३।२।१७७) क्विप् । विद्युत् ।

श्विता वर्णे । ७४५ । श्वेतते । अश्वितत् अश्वेतिष्ट । श्वेतः । श्वित्रम् । स्फायितञ्चीति रक् । श्वित्तम् । श्वित्तमनेन श्वितितमनेन श्वेतितमनेन । श्वितः ।

ञिमिदा स्नेहने । ७४६ । मेदते । मिमिदे । मिन्नः । मिन्नमस्य मेदितमस्य । मेदिता । मेदः । मेद्यतीति दिवादिपाठात् ।

ञिष्विदा स्नेहनमोचनयोः । ७४७ । स्वेदते । सिष्विदे । सिस्वेदयिषति । स्विन्नः । स्विन्नमस्य स्वेदितमस्य । स्विद्यतीति ञिष्विदा गात्रप्रक्षरण इत्यस्य दैवादिकस्य ।

रुच दीप्तौ । ७४८ । अभिप्रीत्याञ्च । रोचते । रुरुचे । अरुचत् अरोचिष्ट । रोचनः । इसुन् रोचिः । रुचिः । घञ् रोकः । अरोकः । अरोकदन् अरोकदन्तः । विभाषा श्यावारोकेति (५।४।१४४) दत्रादेशः ।

घुट परिवर्त्तने । ७४९ । घोटते । जुघुटे । अघुटत् अघोटिष्ट । घोटकः ।

रुट लुट लुठ प्रतीघाते । ७५०-७५२ । रोटते । लोटते । लोठते । लुट्यतीति लुट विलोडन इत्यस्य । लोटतीति परस्मैपदिषूक्तम् । पूर्वं पाठात् ।

शुभ दीप्तौ । ७५३ । शोभते । अशुभत् अशोभिष्ट । शुभम् । शुम्भम् । शोभनम् । गुरोश्च हल इति ( ३।३।१०४ ) चकारस्यानुक्तसमुच्चयार्थत्वात् । शोभा ।

क्षुभ सञ्चलने । ७५४ । क्षोभते । चुक्षुभे । क्षुब्धः क्षुभितः । क्षुभ्नाति क्षुभ्यतीति गणान्तरपाठात् ।

णभ तुभ हिंसायाम् । ७५५।७५६ । नभते । प्रणभते । नेभे । तोभते । तुतुभे । नभ्यति तुभ्यतीति गणान्तरे पाठात् ।

स्रन्सु भ्रन्सु ध्वन्सु अध.पतने । अवस्रंसने च । ७५७-७५९ । स्रंसते । सस्रंसे । व्यस्रसत् । व्यस्रंसिष्ट । स्रस्तम् । स्रंसित्वा स्रस्त्वा । सनीस्रस्यते । सनीस्रंसः । उखास्रत् । भ्रंशते । बभ्रंशे । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टः । भ्रष्टिः । भ्रश्यते इति भ्रशो रूपम् । ध्वन्सु गतौ च । ध्वंसते । दध्वंसे । अध्वसत् अध्वंसिष्ट ।

स्रम्भु विश्वासे । ७६० । विस्रम्भते । सस्रम्भे । अस्रभत् अस्रम्भिष्ट । विस्रब्धः ।

वृतु वर्त्तने । ७६१ । वर्त्तते । ववृते । वर्त्स्यति वर्त्तिष्यते । अवृतत् अवर्त्तिष्ट । विवृत्सति विवर्त्तिषते । वर्त्तित्वा वृत्त्वा । वृत्तम् । वर्त्तिष्णुः । वर्त्तनः । वृत्तिः । वार्त्ता ।

वृधु वृद्धौ । ७६२ । वर्धते । ववृधे । वर्त्स्यति वर्धिष्यते । विवृत्सति विवर्धिषते । दन्त्योष्ठोऽस्य वकार इति भष्भावो न भवति । वर्धित्वा वृद्ध्वा । वृद्धम् ।

शृधु शब्दकुत्सायाम् । ७६३ । शर्धते । शशृधे । शर्द्धः । शर्धञ्जहाः ।

स्यन्दू स्रवणे । ७६४ । स्यन्दते । सस्यन्दे । अनुविपर्य्यभिनिभ्य इति वा षत्वम् (८।३।७२) अनुस्यन्दते तैलम् अनुष्यन्दते वा । सन्त्स्यति स्यन्दिष्यते । अस्यदत् अस्यन्त अस्यन्दिष्ट । स्यन्दित्वा स्यन्त्वा प्रस्यन्द्य । क्त्वि स्कन्दिस्यन्द्योरिति (६।४।३१) नलोपनिषेधः । स्यन्दिता स्यन्ता । प्रस्यन्नः । प्रस्यन्नवान् । स्यदो जवः ।

कृपू सामर्थ्ये । ७६५ । कल्पते । चक्लृपे । कल्पितासे कल्प्तासे

कल्प्तासि । कल्प्स्यति कल्पिष्यते कल्प्स्यते । अक्लृपत् । अकल्पिष्ट अक्लृप्त । चिक्लृप्सते चिकल्पिषते चिक्लृप्सति । चलीक्लृप्यते । क्लृप्तः । प्रक्लृप्तिः । कल्पः । प्रकल्पना ।

वृदिति । वृतु वर्त्तने इत्यस्माद् भूते क्विप् । वृत्तं सम्पन्नं पर्य्यवसितमिति यावत् । द्युतादीनां परिसमाप्तौ सङ्केतो वृत्करणमिदम् ।

सम्प्रति घटादयः षित्त्वार्थं मित्संज्ञार्थञ्चोपदिश्यन्ते ।

घट चेष्टायाम् । ६६६ । घटते । जघटे । घटयति । अघटि अघाटि । घाटं घाटं घटं घटम् । घटा । उद्घाटयतीति घट सङ्घात इत्यस्य चौरादिकस्य रूपम् ।

व्यथ भयचलनयोः । ७६७ । व्यथते । विव्यथे । व्यथयति । अव्यथि अव्याथि । व्याथं व्याथं व्यथं व्यथम् । व्यथा ।

प्रथ प्रख्याने । ७६८ । प्रथते । प्रथयति । प्रथा । अपप्रथत् । पृथिवी । प्रथेः षिवन् संप्रसारणञ्च । (उण् १।१४८) ।

प्रस विस्तारे । ७६९ । प्रसते । प्रसयति । प्रसा ।

म्रद मर्दने । ७७० । म्रदते । म्रदयति । अमम्रदत् । म्रदा ।

स्खद स्खदने । ७७१ । स्खदते । चस्खदे । स्खदयति । स्खदा ।

क्षजि गतिदानयोः । ७७२ । क्षञ्जते । चक्षञ्जे । अक्षाञ्जि अक्षञ्जि । क्षाञ्जं क्षाञ्जं क्षञ्जं क्षञ्जम् । क्षञ्जेर्घटादौ मित्त्वार्थः पाठः । तत्सामर्थ्यादुपधाग्रहणानुवृत्तावपि सत्यां चिण्णमुलोर् दीर्घोऽन्यतरस्या (६।४।९३)-मितुपधादीर्घविकल्पो भवति । षित्त्वफलं तु क्षञ्जेत्यफलमेव। गुरोश्च हल (३।३।१०३) इत्यनेनैव सिद्धत्वात् । एवं दक्षिकक्षिकन्दिक्रन्दीनामपि ।

दक्ष गतिहिंसयोः । ७७३ । दक्षते । अदक्षि अदाक्षि । दाक्षं दाक्षं दक्षं दक्षम् । दक्षा । दक्ष वृद्धौ शीघ्रार्थे चेति अनुदात्तेत्सु पठितम् ।

क्रप कृपायां गतौ । ७७४ । क्रपते । क्रपयति । अस्य घटादौ पाठो मित्त्वार्थः । नतु षित्त्वार्थः । यतः कृपेति क्रपेः संप्रसारणञ्चेति (३।३।१०४,ग) भिदादिपाठेनैव सिध्यति । क्रप कृपेत्येके पठन्ति ।

कदि क्रदि क्रद क्लद वैक्लव्ये । ७७६-७७८ । कन्दते । अकान्दि अकन्दि ।

क्रन्दा। कन्दिशीकः कान्दिशीकः। क्रन्दते। अक्रान्दि अक्रन्दि। क्रन्दा। एतावर्थान्तरे परस्मैपदिनावुक्तौ। तयोश्चापि घटादित्वम्। क्रदते। क्रदयति। क्रदा। क्लदते। क्लदयति। क्लदा।

ञित्वरा सम्भ्रमे। ७७९। त्वरते। त्वरयति। अतत्वरत्। त्वरा। तूर्णः त्वरितः। तूर्णमस्य त्वरितमस्य। तूः तुरौ तुरः। अनुदात्तेत्त्वार्थमकारे वक्तव्ये दीर्घान्तोपादानं वैचित्र्यार्थम्। रुष्यमत्वरेति (७।२।२८) निष्ठायां प्रतिपदं विकल्पितव्यम्। (79)

(1) घटादयः षितः। एते अनुक्रान्ता घटादयः षकारानुबन्धा भवन्ति। तत्र षित्त्वफलं च षिद्भिदादिभ्योऽङित्यङ् (३।३।१०४) प्रत्ययः।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः। एवं घटादीनात्मनेपदिनो मित उक्त्वा परस्मैपदिन उच्यन्ते।

ज्वर रोगे। ७८०। ज्वरति। जज्वार। ज्वरयति। अज्वरि अज्वारि। ज्वारं ज्वारं ज्वरं ज्वरम्। संज्वारी। संज्वारिणी। जूः। जुरौ। जुरः।

गड सेचने। ७८१। गडति। गडयति। गडकः। ण्वुलाश्रया वृद्धिर्न भवति। णिलोपस्य स्थानिवत्त्वात्।

हेड वेष्टने। ७८२। हेडति। हिडयति। अहीडि अहिडि। हिडं हिडं हीडं हीडम्।

वट भट परिभाषणे। ७८३।७८४। वटति। वटयति। भटति। भटयति। वट वेष्टने भट भृतावित्येतयोस्तु वाटयति भाटयतीति।

णट नृत्तौ। ७८५। नटति। प्रणटति। प्राणाटि प्राणटि। नटिका। णट गतावित्येके। नतावित्यन्ये। नटयतीति नट नृत्तावित्यनेन। नट अवस्यन्दन इति चुरादौ नाटयतीति।

ष्टक प्रतीघाते। ७८६। स्तकति। स्तकयति। स्तक्यम्। तिष्टकयिषति।

---

(79) आत्मनेपदार्थमकारानुबन्धे कर्तव्ये दीर्घोपादानं वैचित्र्यार्थम्। रुष्यमत्वरेति निष्ठायां प्रतिपदविकल्प इष्यत इति चपुस्तके पाठान्तरम्।

चक तृप्तौ। ७८७। चकति। चकयति। चक तृप्तिप्रतीघातयोरित्यस्य चकते। चकयति।

कखे हसने। ७८८। कखति। कखयति। अकखीत्।

रगे शङ्कायाम्। ७८९। रगति। रगयति। अरगीत्।

लगे सङ्गे। ७९०। लगति। अलगीत्। लगयति। लग्नं लगितम्। (४०) संसक्तमित्यर्थः।

ह्रगे ह्लगे षगे ष्टगे संवरणे। ७९१-७९४। ह्रगति। अह्रगीत्। ह्रगयति। ह्लगति। अह्लगीत्। ह्लगयति। सगति। असगीत्। सगयति। सिषगयिषति। स्थगति। स्थगयति। तिष्ठगयिषति।

कगे नोच्यते। ७९५। अस्यायमर्थ इति नोच्यते। क्रियासामान्यमस्यार्थ इति यावत्। इह शास्त्रे नोच्यत इत्येके। कगति। कगयति।

अक अग कुटिलायां गतौ। ७९६।७९७। अकति। अकयति। अगति। अगयति।

कण रण गतौ। ७९८।७९९। कणति। कणयति। अकणीत् अकाणीत्। कणिका। रणति। अरणीत् अराणीत्। रणयति। अण रणेत्यादौ कण रणौ शब्दार्थौ। कणति। रणति। तत्र काणयति। राणयति।

चण शण श्रण दाने गतावित्येके। ८००-८०२। चणति। चणयति। शणति। शणयति। श्रणति। श्रणयति।

श्रथ श्लथ क्लथ क्नथ हिंसार्थाः। ८०३-८०६। श्रथति। श्रथयति। श्लथति। श्लथयति। क्लथति। क्लथयति। क्नथति। क्नथयति। जासिनिप्रहण-नाटक्राथपिषां हिंसायामित्यत्र (२।३।५६) नाटक्राथेति निपातनाद्वृद्धिरिति जयादित्येनोक्तम्। चौरस्योत्क्राथयति। स हि क्रथिं चुरादौ न पठति। अन्ये तु क्रथ हिंसायामिति चुरादौ पठित्वा तस्यैतद्रूपमिति वर्णयन्ति। क्लथति। क्लथयति।

चन च। ८०७। चकारेण हिंसायामित्यपेक्षते। चनति। चनयति। चनकम्।

---

(४०) क्षुब्धस्वान्तेति (७।२।१८) निष्ठायां वेट्त्वम्।

वनु च नोच्यते। ८०८। वनति। वनित्वा वान्त्वा। वान्तम्। वनयति। वानयति। (81) उपवनयति।

ज्वल दीप्तौ। ८०९। ज्वलति। जज्वाल। ज्वलयति ज्वालयति। प्रज्वलयति। ज्वालः। ज्वलः। उत्तरत्रास्य पाठो ज्वलादिकार्य्यार्थः। (82)

ह्वल ह्मल चलने। ८१०।८११। ह्वलति। जह्वाल। अह्वालीत्। ह्वलयति ह्वालयति। प्रह्वलयति। ह्मलति। जह्माल। ह्मलयति ह्मालयति। प्रह्मलयति।

स्मृ आध्याने। ८१२। स्मृ चिन्तायामित्युक्तम्। स च स्मरतिरनेकार्थोऽभ्युपेयते। आध्याने स्मरणविशेषे मित्त्वार्थमिह पठ्यते। स्मरति। स्मरयति। आध्यानमुत्कण्ठास्मरणम्। अतोऽन्यत्र स्मारयति। विस्मारयति। स्मारकः शब्दार्थ इति स्मरणसामान्यविवक्षायाम्।

दॄ भये। ८१३। दॄ विदारण इति क्र्यादिः। तस्येह भये मित्त्वार्थः पुनश्च पाठः। दृणन्तं प्रयुङ्क्ते दरयति। भयादन्यत्र दारयति। धात्वन्तराभ्युपगमे दरतीत्येके।

नॄ नये। ८१४। इत्यप्येके। नरयति। अन्येषां नारयति।

श्रा पाके। ८१५। श्रातिश्रायत्योः समान्यानुकरणमिदम्। श्रपयति। शृतं क्षीरम्। पाकादन्यत्र श्रापयति।

मारणतोषणनिशामनेषु ज्ञा। ८१६। निशामनं चक्षुःसाधनं ज्ञानम्। शम लक्ष आलोचन इत्यस्य चौरादिकस्य रूपमेतत्। मारणादिष्वर्थेषु जानातिर्मिद् भवति। ज्ञपयति। मारयति तोषयति निशामयतीति वा। एभ्योऽन्यत्रज्ञापयत्यर्थम्। विज्ञापयति स्वामिनम्। ज्ञापयत्यर्थं क्षीप्समान इति। ज्ञप मिच्चेति चुरादिपाठात्। न्यासकारस्तु श्लाघह्नुङ्स्थाशपां ज्ञीप्समान (१।४।३४) इत्यत्र निशामनशब्देन ज्ञानमुच्यत इति मतान्तरेणोक्तवान्। तथाच तज् ज्ञापयत्याचार्य्य इत्यादि प्रयोगा न सिध्यन्ति। मतान्तरेण तु तत्सिद्धि र्वेदितव्या।

---

(81) ग्लास्नावनुवमाञ्चेति गणसूत्रादनुपसर्गान् मित्त्वं वा।

(82) ज्वलह्वलह्मलनमामनुपसर्गाद्वेति गणसूत्रान्मित्वं वा। ज्वलादिकार्य्यञ्च ज्वलितिकसन्तेभ्यो ण इति (३।१।१४०) वा णप्रत्ययः। ज्वलः ज्वालः।

कम्पने चलिः । ८१७ । चल कम्पने इति ज्वलादौ । स च कम्पनेऽर्थे मित् । चलयति वातः शाखाम् । कम्पनादन्यत्र चालयति सूत्रम् । (83) चालयति शूद्रं स्वार्थं वा ।

छदि ऊर्जने । ८१८ । छद अपवारण इति चुरादिः । तस्योर्जने बले प्राणने च मित्संज्ञार्थमिह पाठः । छदयति । स्वार्थिको वा णिच् । छदन्तं प्रयुङ्क्त इति वा । अपवारणे छादयति । उर्जनादन्यत्र हि च्छादयति ।

जिह्वोन्मथने लड़िः । ८१९ । लड़ विलासे इत्ययं जिह्वयोन्मथने मित् । लड़यति जिह्वया । जिह्वोन्मथनादन्यत्र लाड़यति बालकम् । उन्मथन मुत्क्षेपणम् । डलयोरैक्याद् लालयेत् पञ्चवर्षाणीत्यादि साधु ।

मदी हर्षग्लेपनयोः । ८२० । हर्षग्लेपनयोर्माद्यतिर् मित् । मदयति । हर्षयति ग्लेपयति वा । (84) आभ्यामन्यत्र मादयति ।

ध्वन स्वन शब्दे । ८२१ । ८२२ । स्वन अवतंसन इत्येके । ध्वनयति । स्वनयति । शब्दावतंसनाभ्यामन्यत्र ध्वानयति । स्वानयति ।

(2) घटादयो मितः । अमी घटादयो मित्संज्ञकाः स्युः । मितां ह्रस्वः (६।४।९२) । चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति (६।४।९३) मित्संज्ञाफलम् ।

(3) जनीजॄष्क्नसुरञ्जोऽमन्ताश्च । जायतिजीर्य्यतिक्नस्यतिरञ्जतयो मितः । अमन्ताश्च । जनयति । जरयति । क्नसयति । रञ्जेर्णौ मृगरमण इत्यनुनासिकलोपे (६।४।२४, वा) अतउपधाया इति (७।२।११६) वृद्धौ मित्त्वे मितां ह्रस्वः (६।४।९२) । रजयति मृगान् । अमन्ताः गमयति । रमयति । यमयति । अमन्ताश्चेत्यकारोपादानात् तिम ष्टिम आर्द्रीभाव इत्येतस्य तेमयति ष्टेमयतीति ह्रस्वो न भवति ।

(4) ज्वलह्वलह्मलनमामनुपसर्गाद्वा । अनुपसर्गात् परेषां ज्वलादीनां वा मित्संज्ञा । सोपसर्गानां तु नित्यमेव । पूर्वविधानात् । ज्वलयति ज्वालयति । ह्वलयति ह्वालयति । ह्मलयति ह्मालयति । नमयति नामयति । इह नित्यम् । प्रज्वलयति । प्रह्वलयति । प्रह्मलयति । प्रणमयति ।

---

(83) चिपतीत्यर्थः । (84) ग्लेपनं दैन्यम् ।

(5) ग्लास्नावनुवमाञ्च। एषाञ्चानुपसर्गाणां मित्संज्ञा वा स्यात्। उभयत्र विभाषेयम्। ग्लास्ना इत्येतयोरप्राप्ते वनुवम्योः प्राप्ते। तत्र वनतेर्वनु च नोच्यत इत्यनेन प्राप्ता वमेश्चामन्तत्वात्। ग्लपयति ग्लापयति। स्नपयति स्नापयति। वनयति वानयति। वमयति। वामयति। सोपसर्गात् तु यथाप्राप्तम्। प्रग्लापयति। प्रस्नापयति। प्रवनयति। प्रवमयति।

(6) न कम्यमिचमाम्। नैते मितः। कामयते। अमन्तत्वात् प्राप्ते णिङोऽभावपक्षे णिच्प्रत्यये मित्संज्ञाप्रतिषेधः। कामयति। आमयति। चामयति।

(7) शमोऽदर्शने। नेति वर्त्तते। दर्शनार्थे शमिर्न मित्। निशामयति रूपम्। अन्यत्र शमयति रोगम्। निशमयति वचः शृणोति। (85)

(8) यमोऽपरिवेषणे। यमिर्न मित्। यामयति। आयामयते। परिवेषणे तु यमयति ब्राह्मणान्। कथं नियमयति संयमयति? तत्करोतीति प्रातिपदिकाण्णिच्प्रत्ययः।

(9) स्खदिरपपरिभ्याञ्च। अपस्खादयति। परिस्खादयति। आभ्यामन्यत्र स्खदयति। प्रस्खदयति। (86)

फण गतौ। ८२३। मिदित्यपेक्षते। नेति निवृत्तम्। अनुचितत्वात्। असम्भवाच्च। पूर्वमयं न पठ्यते। फणादिकार्य्यानुरोधात्। फणति। फणयति। पफाण। फेणतुः पफणतुः। फेणुः पफणुः। फाणटम् फणितम्। वृत्। एतस्मात् पूर्वं वृत्करणमित्येके। फाणयति। संफाणयति। वृदिति समस्तघटादिगणपरिसमाप्त्यर्थम्।

इति परस्मैभाषा उदात्ता उदात्तेतः। एते घटादिषु ज्वलादयः परस्मैपदिन इत्यर्थः।

राजृ दीप्तौ। ८२४। राजति राजते। रेजतुः रराजतुः रेजाते रराजाते।

---

(85) निशामय तदुत्पत्तिं विस्तराद्गदतो मम त्यत्र त्वार्षः प्रयोगः। मतान्तरेण वात्र शृण्वित्यर्थः।

(86) स्वादिगणे गणसूत्राणि नवसंख्यकानि। तान्यत्र १।२ इत्यादि संख्याभिश्चिह्नितानि। एवञ्चान्यत्र वेदितव्यम्। विशेषतश्चुरादिगणे। स्वादीघटादयः षित इति हि प्रथमं सूत्रम्।

रराज रेजे रराजे । अरराजत् । इति उभयतोभाषः स्वरितेदुदात्तः । फणादिकार्य्यानुरोधेन हिक्कादिष्वयं न पठ्यते ।

टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । ८२५।८२७ । त्रयोऽपि टितः । भ्राजते । भ्रेजे बभ्राजे । अबभ्राजत् । अबिभ्रजत् । भ्राजथुः । आत्मनेपदार्थमकारानुबन्धे कर्त्तव्ये ऋकारानुबन्धकरणमृदित्प्रकरणानुरोधात् । भ्राशते भ्राश्यते । भ्रेशे बभ्राशे । अबभ्राशत् । भ्राशथुः । भ्लाशते भ्लाश्यते । बभ्लाशे भ्लेशे । अबभ्लाशत् । भ्लाशथुः ।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः । फणादिष्वेते भ्राजृप्रभृतय आत्मनेपदिन इत्यर्थः ।

स्यमु स्वन ध्वन शब्दे । ८२८-८३० । स्यमति । सस्याम । स्येमतुः सस्यमतुः । सस्यमुः स्येमुः । स्यमित्वा स्यान्त्वा । स्यान्तम् । सेसिम्यते । स्वनति । विष्वणति अवष्वणति मांसम् । विस्वनति मृदङ्गः । अवस्वनति वीणा । स्वेनतुः सस्वनतुः । स्वेनुः सस्वनुः । स्वनः स्वानः । निस्वनः निस्वानः । एते फणादयः । ध्वनति । दध्वान । दध्वनतुः । दध्वनुः । ध्वनिः ।

षम ष्टम वैक्लव्ये । ८३१।८३२ । समति । सिषमयिषति । स्तमति । तस्ताम । तिष्टमयिषति ।

अथ णप्रकृतयो ज्वलादयः ।

ज्वल दीप्तौ । ८३३ । ज्वलति । जज्वाल । जज्वलतुः । प्राज्वालीत् । ज्वालः ज्वलः । ज्वलिति कसन्तेभ्यो णः ( ३।१।१४० ) । ज्वलनः । ज्वाला ।

चल कम्पने । ८३४ । चलति । चचाल । चेलतुः । चेलुः । चालः चलः । चलनः ।

जल धान्ये । ८३५ । जलति । जालं जलम् ।

टल ट्वल वैक्लव्ये । ८३६।८३७ । टलति । ट्वलति ।

ष्ठल स्थाने । ८३८ । स्थलति । तिष्ठालयिषति । स्थलम् । विष्ठलम् । कुष्ठलम् । स्थली स्थला । स्थालम् । स्थाली ।

हल विलेखने । ८३९ । हलति । हलं हालम् ।

णल गन्धे । ८४० नलति । प्रणलति । प्रणालः प्रणलः । प्रणालः । करणे गत्यर्थाद् घञ् ।

गल गरणे । ८४१ गलति ।

पल गतौ । ८४२ । पलति । पालं पलम् । वृषादिभ्यः कलच् । पललम् । बाहुल्यात् कालच् । पलालः ।

बल प्राणने धान्यावरोधे च । ८४३ । बलति । बाल । बेलतुः । बेलुः । बालं बलम् ।

पुल महत्त्वे । ८४४ । पोलति । पोलः पुलः । विपुलम् ।

कुल सन्ताने बन्धुषु च । ८४५ । कोलतिः । कोलः । कुलम् ।

शल हुल पत्लृ गतौ । ८४६।८४८ शलति । शालं शलम् । शललम् । हुल हिंसासंवरणयोश्च । चकारोऽन्वाचये । गतावस्य प्रायः प्रयोगः । क्वचित् तु हिंसासंवरणयोः । होलति । पतति । अपप्तत् । आपात्यो देवदत्तः । आपात्यं देवदत्तेन । पतितः । पातुकः । पत्त्रम् । पतेरङ्गच् प्रत्ययः । पतङ्गः । पतिचण्डिभ्यामालञ् (उण्,१।११४) पातालम् । पत स्थश्चेति इनिः । पन्थाः ।

क्वथे निष्पाके । ८४९ । क्वथति । अक्वथीत् । क्वाथः क्वथः ।

पथे गतौ । ८५० । पथति । अपथीत् । पाथम् पथम् ।

मथे विलोड़ने । ८५१ । मथति । अमथीत् । माथः मथः ।

टुवम उद्गिरणे । ८५२ । वमति । ववाम । ववमतुः । ववमुः । वमथुः । वान्तम् । (87) वामः वमः । वमित्वा ।

भ्रमु चलने । ८५३ । भ्रमति भ्रम्यति । भ्राम्यतीति शमादिपाठात् । णप्रत्ययेऽचि च भ्रमः । वृद्धिनिषेधात् । ज्वलादिषु पाठोऽच्कावशक्ताविति (६।२।१५७) नञ उत्तरस्यान्तोदात्तार्थः । भ्रमः । भ्रान्तः । भ्रान्तिः । पोरदुपधादिति (३।१।९८) यत् । भ्रम्यम् ।

क्षर सञ्चलने । ८५४ । क्षरति । अक्षारीत् ।

इति परस्मैभाषा उदात्ता उदात्तेतः । स्यमादयः परस्मैपदिन इत्यर्थः ।

---

(87) आदितश्चेति (७।२।१६) चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तः वान्त इति वृत्तिकारः । तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिरिति मेघदूतम् । वेमुश्च केचिद्रुधिरमित्यार्षः ।

षह मर्षणे। ८५५। सहते। सेहे। विषहते। परिनिविभ्य इति (८।३।७०) षत्वम्। सिवादीनां वाड्व्यवायेऽपीति (८।३।७१) वा षत्वम्। न्यषहत न्यसहत। सर्वंसहः। सहिता सोढ़ा। सोढ़ इति षत्वनिषेधः। विसोढ़ः। विसोढुम्। साहः सहः। "स एवायं नागः सहति कलभेभ्यः परिभवम्।" "ततः प्रोदसहन् सर्वे" इति तु युजादिपाठात्। (88)

रमु क्रीड़ायाम्। ८५६। रमते। रेमे। विरमति। व्यरंसीत्। व्यरंसिष्टाम्। रन्ता। रमणः। रतिः। रामः रमः। अस्योदित्त्वं केचिदिच्छन्ति। तेषां मते रमित्वा रत्वा।

इति आत्मनेभाषौ। अनुदात्तौ इमौ। सहिरमी आत्मनेपदिनौ। ज्वलादिकार्य्यार्थमिह पठ्यते।

षद्लृ विशरणगत्यवसादनेषु। ८५७। सीदति। निषीदति। विषीदति। ससाद। निषसाद। विषसाद। सेदतुः। सत्ता। असदत्। सादः सदः। भावे घञ्। अवसादः। उपसेदिवान्। सद्गुः। निषद्वरः। नौ सदेरिति (उण्, २।२८०) ष्वरच्।

शद्लृ शातने। ८५८। शीयते। शशाद। शेदतुः। शत्स्यति। अशदत्। शत्ता। शत्तुः। शादः शदः। शाद्वलः। शद्लृ शातन इति विशीर्णतायां वर्त्तते। शातनं विषयभावेन निर्द्दिश्यते। प्रसिद्धिवशात्।

क्रुश आह्वाने रोदने च। ८५९। क्रोशति। चुक्रोश। अक्रुक्षत्। क्रोष्टा। क्रोशः क्रुशः।

कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। ८६०। कोचति। कोचिता। कोचकः। कोचः कुचः। कुचं हरतीति कर्मण्यण् (३।२।१)। अन्येषामपि दृश्यत (६।३।१३७) इति पूर्वपदे दीर्घत्वम्। कूचवारः। सोऽभिजनोऽस्येति कौचवार्य्यः।

बुध अवगमने। ( बोधने )। ८६१। बोधति। बोधः बुधः। बुध्यत इति दिवादिपाठात्।

रुह जन्मनि प्रादुर्भावे। ८६२। रोहति। रुरोह। रोढ़ा। अरुक्षत्। पङ्क्तेरुहम्। अवरोहः। रोहः रुहः। आरूढ़म्।

(88) युज पृच संयमन इति चुरादिष्वाधृषीयाः युजादयो विभाषितणिच्काः।

कस गतौ । ८६३ । कसति । चकास । कसिता । कस्वरः । कासः कसः । पृषोदरादित्वात् सिकताः । नित्यबहुवचनान्तोऽयं स्त्रीलिङ्गः (89)

वृदिति । ज्वलादिपरिसमाप्तेः । इति परस्मैभाषा उदात्ता उदात्तेतः । एते सदादयः परस्मैपदिनः । अथोभयपदिनोऽनुक्रमेणोपदिश्यन्ते हिक्कादयः ।

हिक्क अव्यक्ते शब्दे । ८६४ । हिक्कति हिक्कते । गुरोश्च हल इत्यकारे (३।३।१०३) हिक्का ।

अञ्चु गतौ याचने च । ८६५ । अञ्चति अञ्चते । अञ्चित्वा अक्त्वा । गतावस्य पूर्वपाठे फलं कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदम् । अचु इत्येके । अचति । अचते ।

टुयाचृ याच्ञायाम् । ८६६ । याचति याचते । अययाचत् । याचथुः । याच्ञा । डुयाचृ इत्यप्येके । याचित्रिमम् ।

रेटृ परिभाषणे । ८६७ । रेटति रेटते । अरिरेटत् । रेट्यते ।

चते चदे याचने । ८६८ । ८६९ । चतति । चतते । अचतीत् । चतुरः । चातकः । चत्वारः । चदति चदते । अचदत् । अचदीत् ।

प्रोथृ पर्य्याप्तौ । ८७० । प्रोथति प्रोथते । प्रोथ्यते । प्रोथयति । अपुप्रोथत् । प्रोथः ।

मिदृ मेदृ मेधाहिंसयोः । ८७१।८७२ । मेदति मेदते । मिद्यते । मेदः । मेदकः । मेदति मेदते । मेद्यते ।

मेधृ सङ्गमे च । ८७३ । मेधति मेधते । मेधा । मेध्यम् । मेधिः । सर्वधातुभ्यइः ।

णिदृ णेदृ कुत्सासन्निकर्षयोः । ८७४।८७५ । नेदति नेदते । प्रणिद्यते । नेदति नेदते । प्रणेद्यते ।

शृधु मृधु मृधु उन्दे । ८७६।८७८ । शर्धति शर्धते । सर्धति सर्धते । स्पृधुः । मर्धति मर्धते । मृधं संग्रामः ।

---

(89) पृषोदरादित्वादित्यादि ङपुस्तक एव केवले दृश्यते । नित्यबहुवचनान्त इति तु न । प्रायिकं तु बहुवचनम् । एकापि सिकता तैलदाने न समर्थेति भाष्यप्रयोगात् ।

बुधिर् बोधने। ८७९। बोधति बोधते। अबोधिष्ट अबोधीत् अबुधत्। पूर्वत्र पाठोऽस्य कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थः।

उबुन्दिर् निशामने। ८८०। निशामनमालोचनम्। बुन्दति बुन्दते। बुबुन्द बुबुन्दे। अबुदत् अबुन्दीत् अबुन्दिष्ट। बुन्दित्वा बुन्त्वा। बुन्दकः। बुन्नम्।

वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। ८८१। वेणति वेणते। अविवेणत्। इन्। वेणिः। प्रवेणिः।

खनु अवदारणे। ८८२। खनति खनते। चखान चख्ने। खानकः। खनित्वा खात्वा। खातम्। खनित्रम्। वुन् खनकः। खनकी। खनो घ चेति (३।३।१२५) घञ्। घश्चाधिकरणे। आखानः। आखनः। डोडरी। आखः। आखरः। इकः। आखनिकः। इकवकः। आखनिकवकः।

चीवृ आदानसंवरणयोः। ८८३। चीवति चीवते। अचिचीवत्। तीवृ इति केचित्। चीपृ इत्यन्ये। चीपति चीपते।

चायृ पूजानिशामनयोः। ८८४। चायति चायते। अचचायत्। चेकीयते। यङि चायः कीरिति (६।१।३५) कीभावः।

व्यय गतौ। ८८५। व्ययति व्ययते। अव्ययीत् अव्ययिष्ट।

दाशृ दाने। ८८६। दाशति दाशते। अददाशत्। दाशः।

भेषृ भये। ८८७। भेषति भेषते। अबिभेषत्।

भ्रेषृ भ्लेषृ चलने। ८८८।८८९। भ्रेषति भ्रेषते। भ्लेषति भ्लेषते।

अस गतिदीप्त्यादानेषु। ८९०। असति असते। "लावण्य उत्पाद्य इवास यत्नः।" आसे। अष इत्येके। अषति अषते।

स्पश बाधनस्पर्शनयोः। ८९१। स्पशति स्पशते। अपस्पशत्। स्पशः।

लष कान्तौ। ८९२। लषति लषते। अभिलष्यति अभिलष्यते देवदत्तः। ललाष लेषे। अपलाषी। अपि च लष इति (७।२।१४४) घिनुण्। अभिलाषः।

चष भक्षणे। ८९३। चषति चषते। चाषः किकीदिविः। चषकं पानभाजनम्।

कष हिंसायाम्। ८९४। कषति कषते।

क्षष हिंसायाम्। ८९५। क्षषति क्षषते।

झष आदानसंवरणयोः। ८९६। झषति झषते। झषः।

भक्ष भक्षणे। ८९७। भक्षति भक्षते। भ्रक्ष इत्येके। भ्रक्षति भ्रक्षते। भ्लक्ष इत्येके। भ्लक्षति भ्लक्षते। (90)

दासृ दाने। ८९८। दासति दासते। अददासत्।

माहृ माने। ८९९। माहति माहते। ममाह ममाहे। अमाहीत्। अममाहत्। माहितव्यः। दुर्माहितः।

गुहू संवरणे। ९००। गूहति गूहते। निगूहिता निगोढा। घोक्ष्यति घोक्ष्यते गूहिष्यति गूहिष्यते। अगूहीत् अघुक्षत् अगूहिष्ट अघुक्षत अगूढ। अगूढाः अघुक्षथाः। अघूढ्वम् अघुक्षध्वम्। अगुह्वहि अघुक्षावहि। लुग् वेत्यादिना क्सस्य लुक् (७।३।७३)। सन् जुघुक्षति। गुह्यम् गोह्यम्। काकगुहास्तिलाः। गुहः। गूढः। गूढिः। गूहिमम्। गुहा।

इति हिक्कादीन् हलन्तान् गुहूपर्य्यन्तानुभयपदिनो निर्दिश्याजन्तानपि इदानीमुभयपदिनो निर्दिशति।

श्रिञ् सेवायाम्। ९०१। श्रयति श्रयते। शिश्राय शिश्रिये। श्रयिता। शिश्रयिषति शिश्रीषति। घञ्। श्रायः। एरच् (३।३।५६) श्रयः। श्रितः। श्रित्वा। क्विब्वचीति (३।२।१७८ वा) दीर्घः संप्रसारणञ्च। श्रीः। श्रीति ङीबन्तोऽपीति केचित्। इति एते उदात्ताः।

अतः परमनुदात्ताः। अनुक्तमप्यनुदात्तत्वमुपदेशपारम्पर्य्यादवगम्यते।

हृञ् हरणे। ९०२। हरति हरते। जलधिमनुहरते सरः। जहार जह्रे। हर्त्ता। हरिष्यति हरिष्यते हारिष्यते। अहार्षीत् अहृत। अहृढ्वम्। धि चेति (८।२।२५) सिचो लोपः। अहारि। अहृषाताम् अहारिषाताम्। कवचहरः।

---

(90) अत्र भक्ष भक्षणे इति मैत्रेयवचनमनार्षम्। गतिबुद्धीत्यत्र (१।४।५२) भक्षेरहिंसार्थस्य प्रतिषेध इति वार्त्तिकस्य भक्षयति पिण्डीं देवदत्तः। भक्षयति पिण्डीं देवदत्तेनेति ख्यलाडेतुमण्णिचि प्रयोज्यस्य कर्मत्वाभावं दर्शयता भाष्यकारेणास्य परित्यागात्।

कर्मेहरः। हारः। पचाद्यच् हरः। हरिणः। हृश्याभ्यामितन् (उण् ३।३७३)। हरितम्। हरिता हरिणी।

भृञ् भरणे। ८०३। भरति भरते। सनीवन्तर्धेति सनि वेट् (७।२।४९)। बिभरिषति बुभूर्षति। भर्त्ता। भृत्यः। भार्य्या। भारः। भृत्या। भृतिः। बिभर्त्तीति श्लुविकरणपाठेन जौहोत्यादिकस्य रूपम्।

धृञ् धारणे। ८०४। धरति धरते। पचादिपाठादच्। भूधरः। दुर्धरः। धर्मः। कल्याणधर्मा। धृङ् अवध्वंसन इत्यस्याकर्त्त्रभिप्राये क्रियाफलेऽपि धरत इति।

णीञ् प्रापणे। ८०५। नयति नयते। अजां नयति ग्रामम्। प्रणयति। निनाय निन्ये। निन्यतुः। नेता। ग्रामणीः। नेत्रम्। नीतिः। इति उभयतोभाषाः। एते हिक्कादय उभयपदिन इत्यर्थः।

अथानुदात्ताः परस्मैपदिनोऽजन्ताः कथ्यन्ते।

धेट् पाने। ८०६। धयति। दधौ। अधासीत् अदधत् अधात्। धाता। उद्धयः। स्तनन्धयी। धय इति केचित्। धायः। धात्री।

ग्लै हर्षक्षये। ८०७। ग्लायति। ग्लाता। ग्लायात् ग्लेयात्। ग्लानिः। सुग्लः। ग्लानः।

म्लै गात्रविनामे। ८०८। म्लायति। मम्लौ। अम्लासीत्। अम्लासिष्टाम्। म्लानः (91)

द्यै न्यक्करणे। ८०९। द्यायति। दद्यौ। द्यानः।

द्रै स्वप्ने। ८१०। द्रायति। दद्रौ। निद्रा। द्राणः।

ध्रै तृप्तौ। ८११। ध्रायति। दध्रौ। ध्राणः। ध्रायः।

ध्यै चिन्तायाम्। ८१२। ध्यायति। दध्यौ। ध्याता। धीः। ध्यातः।

रै शब्दे। ८१३। रायति कीरः। मयूरः। रात्रिः। राशदिभ्याम् त्रिप्। (उण्, ४।५०७)।

स्त्यै ष्ट्यै शब्दसंघातयोः। ८१४।८१५। द्विष्पाठसामर्थ्यादेकस्य षोप

(91) गात्रविनामः कान्तिहानि रित्यर्थः।

देशत्वम्। स्त्यायति तिष्ट्यासति। प्रस्तीतः प्रस्तीमः। स्त्री। कुस्त्री। दुःस्त्री। तद्भावः। कौस्त्रम्। दौस्त्रम्। (92)

खै खदने। ९१६। खायति। चखौ।

क्षै जै षै क्षये। ९१७—९१९। क्षायति। क्षायो म इति (८।२।५०) मत्वम्। क्षामः। जायति। सायति। सिषापयिषति।

कै गै शब्दे। ९२०।९२१। कायति। चकौ। गायति। जगौ। अगासीत्। गेयो माणवकः। छन्दो गेयं माणवकेन। छन्दोगः। छान्दोग्यम्। गायनः। गायकः। गीतम्। गीतिः। रायतिना सह निर्देशो न कृतः। स हि पूर्वं यण्वत्प्रकरणे निर्दिष्टः। वैचित्र्यार्थो वाऽस्य पृथङ् निर्देशः।

श्रै स्नै पाके। ९२२।९२३। श्रायति। शृतम्। स्नायति। सस्नौ।

पै ओवै शोषणे। ९२४।९२५। पायति। पायात्। पपौ। पास्यति। अपासीत्। पिपासति। वायति। ववौ। वानम्। आवाययति।

ष्टै वेष्टने। ९२६। स्तायति। तिष्टापयिषति।

ष्णै वेष्टने। ९२७। स्नायति। सिष्णापयिषति। (93)

दैप् शोधने। ९२८। दायति। ददौ। अवदातम् मुखम्।

पा पाने। ९२९। पिबति। पपौ। अपात्। पास्यति। पाययति पाययते। पानम्। पीतम्। पिपासति। पिपाययिषति। पात्रम्।

घ्रा गन्धोपादाने। ९३०। जिघ्रति। जघ्रौ। अघ्रात् अघ्रासीत्। अजिघ्रपत् अजिघ्रिपत्। जेघ्रीयते।

ध्मा शब्दाग्निसंयोगयोः। ९३१। धमति। दध्मौ। देध्मीयते। उद्धमः। नाडिन्धमः। उद्ध्मानकम्। अधिकरणल्युडन्तात् कः।

---

(92) युवादित्वादण्। क्वचित् तिस्त्यासतीति उदाहृतम्। अत्र माधवः—"यत्तु मैत्रेयसम्मताकारकाश्यपादिभिरुक्तं धात्वादेः षः स इति (६।१।६४) सत्वाभाव इति तदज्ञदन्यपराः पादयः षोपदेशा इति लक्षणस्याव्याप्तिप्रसङ्गादुपेक्ष्यम्" इति।

(93) ङपुस्तकेऽत्र ष्णै वेष्टने। स्नायति। सिष्णापयिषतीति पाठः। अत्र

"पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्ति जघनं घनम्।

याः स्त्रियो दृष्टवत्यस्ताः पुंभावं मनसा ययु"रिति

भारतीयपद्यस्य पूर्वार्द्धमप्युद्धृतम्। माधवस्त्वाह "ष्टै वेष्टने। अयञ्च पाठो मैत्रेयस्य।" इति।

ष्ठा गतिनिवृत्तौ । ९३२ । तिष्ठति । संतिष्ठते । वितिष्ठते । अवतिष्ठते । तस्थौ । अभितष्ठौ । अधिष्ठास्यति । अध्यष्ठात् । स्थापयति । अतिष्ठिपत् । तिष्ठासति । तेष्ठीयते । निष्ठा । भूमिष्ठः । द्विष्ठः । त्रिष्ठः । उपस्थानीयो देवदत्तः । उपस्थानीयं देवदत्तेन । स्थास्नुः । स्थायुकः । स्थावरः । स्थायः । स्थितिः । स्थानम् । स्थिरः । स्थेयान् ।

म्ना अभ्यासे । ९३३ । मनति । म्नायते । मम्नौ । निम्नम् । सुम्नम् । द्युम्नम् । आम्नायः । आम्नाती व्याकरणे ।

दाण् दाने । ९३४ । प्रयच्छति । संप्रयच्छते दास्या मालाम् । प्रणियच्छति । प्रददौ । दाता । दत्तम् ।

ह्वृ कौटिल्ये । ९३५ । ह्वरति । जह्वार । जह्वरतुः । जह्वरुः ।

स्वृ शब्दोपतापयोः । ९३६ । स्वरति । स्वर्त्ता स्वरिता । सिस्वरिषति सुस्वूर्षति । स्वृतः ।

स्मृ चिन्तायाम् । ९३७ । स्मरति । स्मर्य्यते । सस्मार । सस्मरतुः । स्मर्त्ता । अस्मार्षीत् । यङि चेति (७।४।३०) गुणः । सास्मर्य्यते । ण्यन्ताल्लुङ् । असस्मरत् ।

ह्वृ अनादरे । ९३८ । ह्वरति । दह्वार । दह्वरतुः । ह्वारम् । (94)

सृ गतौ । ९३९ । सरति धावति । ससार । सस्रतुः । सस्रुः । असरत् । सारः । असुन् सरः । गौरादित्वात् सरसी । प्रजने सर्त्तेरित्यप् (३।३।७१) । उपसरः ।

ऋ गतिप्रापणयोः । ९४० । ऋच्छति । आर । आरतुः । अर्त्ता । अरिष्यति । आरत् । अर्पयति । (95) "अरिलं केलिपातकः ।"

गृ घृ सेचने । ९४१।९४२ । गरति । जगार । घरति । जघार । घृतम् । घृणा । घर्मः । अन्यत्वानभिधानमित्येके । घारयतीति चौरादिकस्य ।

ध्वृ हूर्च्छने । ९४३ । ध्वरति । ध्वर्य्यते । दध्वार । दध्वरतुः । ध्वृषीष्ट ध्वरिषीष्ट ध्वारिषीष्ट । यङि दाध्वर्य्यते ।

---

(94) अत्र ह्वृ इति माधवादिग्रन्थे नास्ति ।

(95) माधवादिमते तु आर्षीत् । चपुस्तके चैवम् ।

षु स्रु गतौ। ९४४। ९४५। सवति। सुषावयिषति। स्रवति। सुस्राव। असुस्रुवत्। सिस्रावयिषति सुस्रावयिषति। असिस्रवत् असुस्रवत्। प्रस्रावः।

षु प्रसवैश्वर्ययोः। ९४६। सवति। सुषाव। सोता। असौषीत्। सुतः। उत्सवः।

श्रु श्रवणे। ९४७। शृणोति। संशृणुते। शुश्रूषते। विश्रावः। प्रतिश्रवः। श्रुतिः।

ध्रु स्थैर्ये। ९४८। ध्रवति। दुध्राव। ध्रुवः।

दु द्रु गतौ। ९४९। ९५०। दवति। द्रवति। अदुद्रुवत्।

जि ज्रि अभिभवे। ९५१। ९५२। जयविशेषोऽभिभव इति विशेषार्थोऽयं पुनर्जयतिः पठ्यते। जयति। जिगाय। ज्रयति। जिज्राय। इति परस्मैभाषा अनुदात्ता उदात्तेतः। एते धेड़ादयः परस्मैपदिनः। अनिटः।

ष्मिङ् ईषद्धसने। ९५३। स्मयते। विसिष्मिये। स्मेता। विस्मापयते विस्माययति। सिस्मयिषते। स्मेरम्। विस्मयः। स्मयः।

गुङ् अव्यक्ते शब्दे। ९५४। गवते। जुगुवे। गुवाकः। पिनाकादयश्चेत्याकः (उण्, ४।४५४)।

गाङ् गतौ। ९५५। गाते। त्रिष्वपि वचनेषु रूपमेतत्। गायते। जगे। जगाते। अगास्त।

घुङ् कुङ् उङ् ङुङ् शब्दे। ९५६-९५९। घवते। जुघुवे। कवते। चुकुवे। कोकूयते। न कवतेर्यङीति (७।४।६३) चुत्वनिषेधः। अवते। ऊवे। ऊषिषते। ङवते। ङुङुवे। ओङूयते।

च्युङ् क्रुङ् ज्युङ् झ्युङ् प्रुङ् प्लुङ् गतौ। ९६०-९६५। च्यवते। चुच्युवे। चिच्यावयिषति। चुच्यावयिषति। च्युतः। क्रवते। ज्यवते। जुज्युवे। झ्यवते। प्रवते। आप्राव्यो देवदत्तः। आप्राव्यं देवदत्तेन। प्लवते। पुप्लुवे।

क्लुङ इत्येके। ९६६। क्लवते। विक्लवः।

रुङ् गतिरेषणयोः। ९६७। रवते। रुरुवे। रुतम्।

धृङ् अवध्वंसने। ९६८। धरते। दध्रे।

मेङ् प्रणिदाने । ९६९ । अपमयते । अपमित्य याचते अपमाय याचते । अपमीयते । मितिः । मितम् ।

देङ् रक्षणे । ९७० । दयते । प्रणिदयते । दीयते । दयतेर्दिगि लिटीति (७।४।९) दिग्यादेशेन द्विर्वचनबाधेष्यते । दिग्ये । दत्तम् ।

श्येङ् गतौ । ९७१ । श्यायते । अवश्यायः । शीनं घृतम् । शीतो वायुः ।

प्येङ् वृद्धौ । ९७२ । प्यायते । पप्ये । पप्याते । प्यानम् ।

त्रैङ् पालने । ९७३ । त्रायते । तत्रे । त्राणः त्रातः । इति एते अनुदात्ताः स्मयतिप्रभृतयः ।

पूङ् पवने । ९७४ । पवते । पुपुवे । पविता । पूङश्चेति ( ७।२।५१ ) वेट् । पवितः पूतः । पवित्वा पूत्वा । पिपविषते । पुनातीति पूञो रूपं क्रैयादिकस्य ।

मूङ् बन्धने । ९७५ । मवते । मविता । मूतः । मूत्वा ।

डीङ् विहायसा गतौ । ९७६ । डयते । डिड्ये । डयिता । डयिष्यते । चिण्वद्भावपक्षे डायिष्यते । डिडयिषते । डयितः । डयितवान् । डयतेः परस्य निष्ठाप्रत्ययस्य सेटः कित्त्वप्रतिषेधो धातुपारायणे उपसंख्यातः । इति आत्मनेभाषाः ।

तॄ प्लवनतरणयोः । ९७७ । तरति । ततार । तेरतुः । तेरुः । तरिता तरीता । अतारीत् । तितरिषति तितरीषति तितीर्षति । तीर्णः । तीर्णवान् । तीर्त्वा । तरः । आतरः । आतरिकः । इति परस्मैभाष उदात्तः । सेट्त्वादस्य प्राङ्निर्देशो न कृतः ।

गुप गोपनकुत्सनयोः । ९७८ । जुगुप्सते । निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यत इति वचनान्निन्दायां सन् । जुगुप्साञ्चक्रे । निन्दाया अन्यत्राप्यर्थेऽस्मात् केवलादात्मनेपदं न भवति । अनभिधानात् । तदुक्तं "नैतेभ्यः सनः प्रागात्मनेपदं परस्मैपदं वा पश्याम इति" (96) तत् केवलादात्मनेपदार्थम-

(96) भाष्यकारवाक्यमिदमत्रोद्धृतम् ।

स्यानुदात्तेत्त्वं न भवतीति सामर्थ्यात् सन्नन्तादात्मनेपदं भवति। उत्तरत्राप्येवं वेदितव्यम्। निन्दाया अन्यत्र (97) गोपिता। गोपित्वा। गोपनम्। गुपितम्। गोपः।

तिज निशाने। क्षमायाञ्च। ९७९। तितिक्षते। क्षमाया अन्यत्र तेजनम्। असुन् तेजः।

मान पूजायाम्। ९८०। मीमांसते। मानयति। मानः। मानित इति चौरादिकस्य धातोः कर्मणः समानकर्तृकादिच्छायां वेति (३।१।७) वाग्रहणं पूर्वयोगस्यापि (३।१।६) शेष इत्यन्ये मानयतीति व्युत्पादयन्ति।

बध बन्धने। ९८१। बीभत्सते। बीभत्सं विकृतम्। पूर्ववद्वाग्रहणाद् बधको बध इति च भवति। इति एते गुप्प्रभृतय उदात्ताः।

रभ राभस्ये। ९८२। आरभते। आरेभे। रब्धा। रभ्यम्। आरम्भः। रब्धिः। रब्धुम्। रब्धः। रब्ध्वा।

डुलभष् प्राप्तौ। ९८३। लभते। लेभे। लब्धा। लम्भयति। लभ्यम्। उपलम्भः। लाभः। सुलभः। लब्धिमम्। प्रलभा। उपलब्धिः।

ष्वन्ज परिष्वङ्गे। ९८४। स्वजते। परिष्वजते। परिषस्वजे परिषस्वञ्जे। परिष्वङ्क्ता। पर्यस्वजत पर्यष्वजत। अभिषिष्वङ्क्षते। सिष्वञ्जयिषति।

हद पुरीषोत्सर्गे। ९८५। हदते। जहदे। हत्ता। हन्नम्। हत्त्वा। हदनम्। हत्। हदं डिपति क्षिपतीति हड्डिपः। डिप क्षेप इति मूलविभुजादित्वात् कः। इति आत्मनेभाषा अनुदात्ता अनुदात्तेतः।

ञिक्ष्विदा अव्यक्ते शब्दे। ९८६। क्ष्वेदति। चिक्ष्वेद। क्ष्वेदिता। क्ष्विण्णः। क्ष्विण्णमनेन क्ष्वेदितमनेन। क्ष्विद्यतीति ञिक्ष्विदा स्नेहनमोचनयोरित्यस्य दैवादिकस्य।

स्कन्दिर् गतिशोषणयोः। ९८७। स्कन्दति। विस्कन्दति विष्कन्दति।

---

(97) सैवयमते एतेभ्यः तिङामभावः। तेन क्त एव उदाहृताः। तथाच माधवः—"अत्र नन्दिमैत्रेयौ नह्येतेभ्य इत्यादिना भाष्येण तिङामभाव प्रतीयत इति निन्दादेरन्यत्र क्त मुदाजह्रतुः।" इति। "एते नित्यं सन्नन्ताः। अर्थान्तरे त्वननुबन्धका चुरादय" इति भट्टोजिः। तेन गोपयति। तेजयति। इत्यादि।

चस्कन्द । स्कन्ता । अस्कन्दत् । अस्कान्त्सीत् अस्कदत् । चनीस्कद्यते । चिस्कन्त्सति । स्कन्त्वा प्रस्कन्द्य । स्कन्नः । स्कन्नवान् । (98)
यभ विपरीते मैथुने । ९८८ । विपरीतार्थपूर्व्वक इत्यर्थः । (99) यभति । ययाभ । येभतुः । यब्धा । अयाप्सीत् । यब्ध्वा । यभ्यम् । जभ इत्येके । जम्भति । जम्भिता । जभ्यम् । जम्भयति ।

णम प्रह्वत्वे शब्दे च । ९८९ । नमति । प्रणमति । नमते स्वयमेव । नन्ता । अनंसीत् । अनंस्त दण्डःस्वयम् । नतः । नम्रः ।

गम्लृ सृप्लृ गतौ । ९९०।९९१ । गच्छति । संगच्छते । जगाम । गन्ता । गमिष्यति । संगंस्यते । अगमत् । समगत समगंस्त । जिगमिषति । हृदयङ्गमः । आगामी । गामुकः । गमः । सर्पति । ससर्प । स्रप्ता सर्प्ता । असृपत् । सर्पः । उपसर्पः । सृप्त्वा । सृप्तः । सर्पिः ।

यमु उपरमे । ९९२ । उदित्त्वमस्य केचिन्नेच्छन्ति । यच्छति । आयच्छते । ययाम । यन्ता । अयंसीत् । आयामयते । यमित्वा यत्वा । संयमः संयामः । यमः ।

तप सन्तापे । ९९३ । तपति । उत्तपते । निष्टपति । तप्ता । सन्तापः । सन्तापकः । तपः ।

त्यज हानौ । ९९४ त्यजति । तत्याज । त्यक्ता । त्यक्ष्यति । अत्याक्षीत् । त्यक्त्वा । त्यागः । त्याज्यम् । त्यागी । त्यक्तः ।

षन्ज सङ्गे । ९९५ । सजति । अभिषजति । ससञ्ज । ससञ्जतुः । सङ्क्ता । सङ्क्ष्यति । अभ्यषजत् । सिसङ्क्षति । अभिषिषङ्क्षति । सिषञ्जयिषति । अभिषङ्गः ।

दृशिर् प्रेक्षणे । ९९६ । पश्यति । सम्पश्यते । ददर्श । ददृशतुः । द्रष्टा । अदर्शत् अद्राक्षीत् । परलोकदृश्वा । सदृक् । सदृशी । सदृशः । दृष्ट्वा । दृष्टम् । दृष्टिः ।

---

(98) माधवादिमते तु क्त्वेवायं विकल्पः । विस्कन्ता विष्कन्तेति । नतु तिङि । वेः स्कन्देरनिष्ठायामिति (८।३।७३) पर्य्युदासात् ।

(99) विपरीतानुष्ठान इत्यर्थ इति पाठान्तरम् ।

दन्श दंशने। ९९७। दशति। दश्यते। ददंश। ददंशतुः। दंष्टा। अदाङ्क्षीत्। दन्दश्यते। दष्टम्। दष्ट्वा। दंष्ट्रा।

कृष विलेखने। ९९८। कर्षति। चकर्ष। चकृषतुः। कर्ष्टा क्रष्टा। अक्राक्षीत् अकार्क्षीत् अकृक्षत्। कृषते कृषतीति तु तुदादिपाठात्।

दह भस्मीकरणे। ९९९। दहति। ददाह। धक्ष्यति। अधाक्षीत्। दग्ध्वा। दग्धुम्। काष्ठधक्।

मिह सेचने। १०००। मेहति। मिमेह। मेढा। अमिक्षत्। मेढ्रम्। मेहनम्। मेढुम्।

कित निवासे रोगापनयने च। १००१। चिकित्सति। सङ्केतः। निकेतनम्। इति परस्मैभाषा अनुदात्ता उदात्तेतः। अथोभयपदिनः।

दान अवखण्डने। १००२। दीदांसति दीदांसते।

शान तेजने। १००३। शीशांसति। शीशांसते। दानयति शानयतीति वाग्रहणात्।

डुपचष् पाके। १००४। पचति पचते। पक्ता। पक्त्रिमम्। पचा। पचः। मितम्पचः। पक्तिः। पक्वम्। पाकः। उत्पचिष्णुः। पाकिमा लता।

षच समवाये। १००५। सचति सचते। सिसचिषति। पूर्ववत्सन इत्यनेन (१।३।६२) कर्त्त्रभिप्राये सिसचिषते। सिषाचयिषति। षच सेचन इत्यनुदात्तेत् प्रागुक्तः क्रियाफलेऽकर्त्त्रभिप्रायेऽप्यात्मनेपदार्थः।

भज सेवायाम्। १००६। भजति भजते। भक्ता। भक्तुम्। अर्थभाक्। भक्तम्। भगम्। (100)

रञ्ज रागे। १००७। रजति रजते। रज्यति अथवा रज्यते वस्त्रं स्वयमेव। रङ्क्ता। रागी। रागः रङ्गः। रक्तः। रञ्जः। रञ्जकः। रक्त्वा रङ्क्त्वा। रजकः। रजकी। रजनम्। रजनी।

शप आक्रोशे। १००८। शपति शपते। तस्मै शपते। शप्ता। शापः।

---

(100) खगी घ चेति चशब्दात् घः। कुलम्। भगम् (३।३।१२५) इति माधवः। चकारस्यानुक्तसमुच्चयार्थत्वं द्रष्टव्यमित्यर्थः।

शपनः । शबलः । शबली । शबलगुः । रञ्जिशपी दिवादावपि पठ्येते उभयपदिनौ ।

त्विष दीप्तौ । १००९ । त्वेषति त्वेषते । त्वेष्टा । त्विट् । अवपूर्वो दान-निरसनयोः । अवत्वेषति अवत्वेषते ।

यज देवपूजासङ्गतिकरणदानेषु । १०१० । यजति यजते । इज्यते । इयाज ईजे । ईजतुः ईजाते । यष्टा । अयाक्षीत् अयष्ट । यागः । इष्टिः । इज्या । अग्निष्टोमयाजी । यज्ञः । ऋत्विक् । इष्टम् । इष्ट्वा ।

डुवप बीजसन्ताने । १०११ । वपति वपते । उप्यते । उवाप ऊपे । ऊपतुः ऊपाते । वप्ता । उप्तम् । उप्त्रिमम् ।

वह प्रापणे । १०१२ । वहति वहते । पुरुषवाहं वहति । भारं वहति । प्रवहति । उह्यते । उवाह ऊहे । ऊहतुः ऊहाते । उवहिथ उवोढ । वोढा । अवाक्षीत् अवोढ । वहः । प्रवाहः । वह प्रापण इति सकर्मकोऽयम् । अर्थान्तरे वृत्ते स्यन्दनेऽर्थे वर्त्तमानोऽकर्मकः नदी वहतीति । इह तु जीवति प्राणान् धारयतीति पटमिच्छति पटीयतीति धात्वर्थेन कर्मण उपसंग्रहे-ऽकर्मकत्वम् । इहास्ते शेत इति प्रसिद्धितः । इह सङ्गच्छते संपश्यते आहत इति कर्माविवक्षायाम् । तदुक्तम्—

> "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् ।
> प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" ॥१॥ इति ।

इति उभयतोभाषाः स्वरितेतोऽनुदात्ताः । दाञ्श्रान्सचयस्तूदात्ताः ।

वस निवासे । १०१३ । वसति । उष्यते । उवास । ऊषतुः । वस्ता । वत्स्यति । अवात्सीत् । अवात्ताम् । उषितः । उषितवान् । उषिवान् । उषित्वा । वसतेर्वासिर्वर्धकिभाण्डम् । अनिट्प्रकरणानुरोधेन यजादिकार्य्यानु-रोधेन च एते वहिप्रभृतयो हलन्ता अपि यथायथं वर्गेषु पूर्वं नोपदिष्टाः । अयमुदात्तेदनुदात्तः परस्मैभाषः ।

वेञ् तन्तुसन्ताने । १०१४ । वयति वयते । ववौ ववे उवाय ऊये ऊवे । ववतुः ववाते ऊयतुः ऊयाते ऊवतुः ऊवाते । ववुः वविरे ऊयुः ऊयिरे ऊवुः

ऊविरे। ऊयते। वाययति। उतः। निरुतम्। ऊतिः व्यूतिः। प्रोतकम्। प्रोतिका। उत्वा प्रवाय।

व्येञ् संवरणे। १०१५। व्ययति व्ययते। विव्याय विव्ये। विव्यतुः विव्याते। विव्युः विव्यिरे। विव्ययिथ विव्यिषे। व्याता। वेवीयते। प्रव्याय वीत्वा। परिवीय परिव्याय।

ह्वेञ् स्पर्द्धायां शब्दे च। १०१६। ह्वयति ह्वयते। निह्वयते। हूयते। जुहाव जुहुवे। जुहुवतुः जुहुवाते। ह्वाता। अह्वास्त अह्वत् अह्वत। जोहूयते। जुहूषति जुहूषते। जुहावयिषति। अजूहवत्। प्रह्वः। हूतः। निहवः। हवः। आहवः। हूतिः। मित्रह्वायः। एते विभाषिता इत्युभयपदिनः। अनुदात्ता अनिटश्च।

वद व्यक्तायां वाचि। १०१७। वदति। उद्यते। उवाद। ऊदतुः। वदिता। उदित्वा। उदितम्। अवद्यम्। अनुद्यम्। अनुवाद्यम्। अपवाद्यम्। ब्रह्मवादी। वदनम्। वावदूको वाचालः। वदान्यः।

टुओश्वि गतिवृद्ध्योः। १०१८। श्वयति। शिश्वाय शुशाव। शिश्वियतुः शुशुवतुः। श्वयिता। शूयात्। अश्वत् अशिश्वियत् अश्वयीत्। शेश्वीयते शोशूयते। शुशावयिषति। शिश्वाययिषति। अशूशवत् अशिश्वियत्। श्वयथुः। शूनः। शूनवान्।

इति परस्मैभाषाविति। परस्मैपदिनावेतौ उदात्तौ च। वृदिति। यजादि परिसमाप्तेः। न्याय्यविकरणा स्तु भ्वादयोऽपरिसमाप्ता एव। अवृत्करणात्। तेनात्वान्येऽपि धातवो इचुलुम्पप्रभृतयो द्रष्टव्याः। तेनेदमपि सिध्यति "कलां नार्हन्ति षोड़शी" मिति। (101)

इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ धातुप्रदीपे भ्वादीनां वृत्तिः॥ १॥

---

(101) ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम्॥१॥

इति मानवधर्मशास्त्रे। तत्रायं धातुरर्ह पूजायामित्यस्माद् भिन्नएव। एवञ्च मैत्रेयमतम्। अर्हन्ति प्राप्नुवन्ति। जपयज्ञस्य षोड़शांशेनापि न समा भवन्तीति कुल्लूकः। अर्हतिः प्राप्त्याद्यर्हमूल्यपणने वर्त्तते। अर्हशब्दात् क्विपं कृत्वार्हन्तीति रूपमिति तु मेधातिथिः।

# अथादादय उच्यन्ते ।

——()o()——

अद भक्षणे । १ । अत्ति । अत्तः । अदन्ति । आद जघास । लिट्यन्यतरस्याम् (२।४।४०) । आदतुः जक्षतुः । इडत्यर्त्तिव्ययतीनाम् (७।२।६६) । आदिथ जघसिथ । इत्ता । अत्तु अत्तात् । अद्धि । आदत् । आत्ताम् । आदन् । अघसत् । व्यत्यघस्त । व्यत्यघत्साताम् । अक्षरः । सस्यात् । क्रव्यात् । क्रव्यादः । (1) अदतौ । अन्नम् । जग्धम् । जग्धवान् । प्रजग्ध्य । घासः । प्रघसः ।

हन हिंसागत्योः । २ । हन्ति । (2) आहते । हतः । घ्नन्ति । जघान । जघ्नतुः । हन्ता । हतात् हन्तु । जहि । अहन् । हन्यात् । वध्यात् । अवधीत् । घातयति । जेघ्नीयते जङ्घन्यते । जिघांसति । ब्रह्महत्या । अश्वहत्या । वृत्रहा । वृत्रहणौ । एकाजुत्तरपदे णः (८।४।१२) । जङ्घा । अहल्या । इति परस्मैभाषावनुदात्तौ ।

द्विष अप्रीतौ । ३ । द्वेष्टि द्विष्टे । द्वेष्टा । द्विषन् द्विषाणः । विद्विट् । द्विष्टम् ।

दुह प्रपूरणे । ४ । दोग्धि पयो गामस्मै गोपः । दुग्धे । दुह्यते गौः क्षीरम् । प्रधाने कर्मणि लकारः । "स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता ।" दुदोह दुदुहे । दोग्धा । अधुक्षत् अधुक्षत अदुग्ध । अधुक्षः अदुग्धाः अधुक्षथाः । अधुग्ध्वम् अधुक्षध्वम् अधुक्षथ । अदुह्वहि अधुक्षावहि अधुक्षाव । स्वयमदुग्ध स्वयमदोहि स्वयमधुक्षत । (3) गोधुक् । कामदुघा गौः ।

---

(1) सस्यादित्यदोऽनन्ने इति (३।२।६८) विट् । अन्नोपपदे तु अन्नादः । कर्मण्यण् (३।२।१) । क्रव्यादिति क्रव्ये चेति (३।२।६९) विट् । अदोऽनन्न इत्येव (३।२।६८) सिद्धे पुनर्विधानं वासरूपविधिबाधनार्थम् । क्रव्याद इति कृत्तविकृत्तपक्वमांसशब्दोपपदेऽण् । पृषोदरादित्वादुपपदस्य क्रव्यभावः । क्रव्यादोऽस्रप आशर इत्यमरः । कथं तर्हि व्याप्तं गुहाशयैः क्रूरैः क्रव्यादैः सनिशाचरैरिति भट्टिः ? चिन्त्यम् । नह्यामममांसभक्षे व्याघ्रादौ क्रव्याद इति स्यात् ।

(2) भूदेवेभ्यो महीं दत्त्वा यज्ञैरिष्ट्वा सुदक्षिणैः ।
अनुक्त्वा निष्ठुरं वाक्यं स्वर्गं हन्तासि सुव्रत ॥१॥ इत्यत्र हन्तिर्गत्यर्थः ।

(3) दुहश्चेति कर्मकर्तरि (३।१।६३) वा चिण् । पक्षे क्सः । लुक् च ।

दिह उपतापे । ५ । देग्धि दिग्धे । धेक्षि धिक्षे । देग्धा । दिह्यात् दिहीत । अदिग्ध अधिक्षत अधिक्षत् । अदिग्धाः अधिक्षथाः अधिक्षः । अधिग्ध्वम् अधिक्षध्वम् अधिक्षत | अदिह्वहि अदिक्षावहि अधिक्षाव: | देहः । देहौ । दिग्धम् ।

लिह आस्वादने । ६ । लेढि लीढे । लिलेह लिलिहे । लेढा । अलेट् अलीढ । अलिक्षत् अलिक्षत अलीढ । अलीढाः अलिक्षथाः अलिक्षः । अलीढ्वम् अलिक्षध्वम् अलिक्षत | अलिह्वहि अलिक्षावहि अलिक्षाव । लीढः । श्वलिट् । इति उभयतो भाषाः स्वरितेतोऽनुदात्ताः । एतेऽदिप्रभृतयोऽनुदात्ताः ।

चक्षिङ् व्यक्तायां वाचि । ७ । इकारोऽनुदात्तेतश्च हलादेरिति (३।२।१४९) विशेषणार्थो युजर्थश्च । यद्येवं तत एवात्मनेपदं सेत्स्यति । किं ङित्करणेन ? अन्तेदित्त्वान्नुम् स्यात् । नुम् मा भूदित्यर्थः । एवं तर्ह्यकारोऽस्तु । तत एवात्मनेपदं युजपि भविष्यति । वैचित्र्यार्थमनुबन्धद्वयस्योपादानमित्येके । आत्मनेपदानित्यत्वज्ञापनार्थमित्यन्ये । आचष्टे । आचक्षाते । आचक्षते । वा लिटीति ( २।४।५५ ) (4) ख्याञादेशविकल्पः । आचख्यौ आचख्ये आचचक्षे । अस्यतिवक्तिख्यातिभ्योऽङ् ( ३।१।५२ ) अख्यत् अख्यत । प्रियाख्यः । मूलविभुजादिकः (३।२।५, वा) । गोसंख्यः । पशुसंख्यः । विचक्षणः । नृचक्षाः । असुन् । सञ्चक्ष्या दुर्जनाः । वर्जनीया इत्यर्थः ।

ईर गतौ कम्पने च । ८ । ईर्त्ते । ईराते । ईरते । ईराञ्चक्रे । ईर्त्तः केचिदामभावमिच्छन्ति । ईरे (5) । ईरयति । समीरितम् । समीरणः । निरुमीर्त्त इति नीरम् । इगुपधकः (३।१।१३५) । स्वैरम् । स्वैरी ।

ईड़ स्तुतौ । ९ । ईट्टे । ईड़ाते । ईड़ते । ईड़ाञ्चक्रे । ईड़िषे । ईड़िध्वे । ईड़िष्व । ईड़िध्वम् । ईड्यः । ईड़ा ।

---

(4) ख्याञादेशस्थायं क्शादिश्च । अतो लिटि आचक्शौ आचक्शे । लुङि अक्शासीत् अक्श । इत्यपि रूपम् ।

(5) रथचरणादिभिरीरिरेऽनुवीरा इति च प्रयोगः । अयञ्चापशब्द एव । भाष्यवार्त्तिकविरोधात् ।

ईश ऐश्वर्य्ये । १० । ईष्टे । ईशाते । ईशते । ईशाञ्चक्रे । ईशिषे । ईशिध्वे । ईशानः । ईश्वरः । ईश्वरा । "विन्यस्तमङ्गलमहौषधिरीश्वरायाः ।" ईश्वरीतिश्चौणादिको वरट् । (6)

आस उपवेशने । ११ । आस्ते । आसाते । आसते । आसाञ्चक्रे । आसीनः । आस्या । (7) आसना ।

आङ् शासु इच्छायाम् । १२ । उकारोऽस्य नाग्लोपिशास्वृदितामित्यत्र (७।४।२) सामान्यग्रहणाविघातार्थः । उदितो वेति (७।२।५६) विशेषणार्थश्च । क्त्वाप्रत्ययस्य च प्रयोगश्छन्दस्येव सम्भवति । तत्र ल्यपोऽभावः फलम् । क्त्वापि छन्दसीति (७।१।३८) अनादेशः । प्रयोजनान्तरमिड्विकल्पश्च । आशासित्वा आशास्त्वेति । आशास्ते । आशासाते । आशासते । आशासूसे । आशशासे । आशासिष्ट । आशशासत् । आशास्तः । आशास्तवान् । आशासयति । आशासा (8) । आङ्सहितस्य शासेरिह ग्रहणाच् शासु अनुशिष्टौ इत्यस्य ग्रहणं नेष्यत इति शास इदङ् हलोरितीत्त्वं ( ६।४।३४ ) न भवति । आशीरिति तु ज्ञापकात् सिद्धम् । (9)

वस आच्छादने । १३ । वस्ते । वसाते । वसते । ववसे । वसिता । वसितम् । वसित्वा । वसनम् । वासः । चर्मवः ।

कसि गतिनिशानयोः । १४ । कंस्ते । कंसाते । कंसते । चकंसे । कंसः सुरारिभेदः । कांस्यम् ।

णिसि चुम्बने च । १५ । निंस्ते । निंसूसे । निंसे । प्रणिंस्ते प्रनिंस्ते । निनिंसे । निंसिता ।

णिजि शुद्धौ । १६ । निङ्क्ते । प्रणिङ्क्ते । निनिञ्जे ।

शिजि अव्यक्ते शब्दे । १७ । शिङ्क्ते । शिञ्जाते । शिञ्जते । शिशिञ्जे । शिञ्जा । शिञ्जानः । शिञ्जितम् ।

---

(6) प्रसीद विश्वेश्वरि पाहि विश्वमिति देवीमाहात्म्ये ।

(7) वासरूपविधिना ण्यत् ।

(8) गुरोश्च हल (३।३।१०३) इत्यङ् ।

(9) चियाशीःप्रैषेषु तिङाकाङ्क्षमिति (८।२।१०४) निर्देशात् ।

पिजि वर्णे। १८। पिङ्क्ते। पिञ्जाते। पिपिञ्जे। पिञ्जरः। पिङ्गलः। पिङ्गली।

पृजि इत्येके। १९। पृङ्क्ते।

वृजी वर्जने। २०। वृक्ते। वृजाते। वृजते। ववृजे। वर्जिता। वृक्तम्। (10)

पृची सम्पर्के। २१। पृक्ते। पपृचे। पृक्तः। सम्पर्कः। पृणक्तीति रुधादिपाठात्।

षूङ् प्राणिगर्भविमोचने। २२। सूते। सुवाते। सुवते। सुषुवे। सुषुवाते। सविता सोता। सूताम्। सुवाताम्। सूष्व। सूध्वम्। सुवै। सुसूषते। सूतः। सूतवान्। सूत्वा। सूतिः। अङ्गदसूः। सूतका सूतिका।

शीङ् स्वप्ने। २३। शेते। शयाते। शेरते। शय्यते। शिश्ये। शिश्याते। शिश्यिरे। शाशय्यते। शयनम्। शयालुः। शय्या।

इति आत्मनेभाषा इति। आत्मनेपदिन इत्यर्थः।

यु मिश्रणे। २४। यौति। युयाव। यविता। अयावीत्। यियविषति युयूषति। यूतिः। योत्रम्। युतः।

रु शब्दे। २५। रौति। रुराव। रविता। संरावः। रवः रावः। रुतम्।

णु स्तुतौ। २६। नौति। प्रणौति। प्रणुनाव। नविता। नुतः।

टुक्षु शब्दे। २७। क्षौति। चुक्षाव। क्षविता। क्षवः। क्षवथुः। क्षुतम्। उत्तरसंयोगवत्प्रकरणानुरोधेन रु शब्द इत्यनेन सह न निर्दिश्यतेऽयम्।

क्ष्णु तेजने। २८। क्ष्णौति। संक्ष्णुते शस्त्रम्। चुक्ष्णाव। क्ष्णविता।

ष्णु प्रस्रवणे। २९। स्नौति। स्नूयते। प्रस्नुते गौः स्वयमेव। प्रास्नोष्ट स्वयमेव। सुष्णाव। स्नविता। सुस्नुषति। स्नुषा। इति एते परस्मैभाषाः। यौतिप्रभृतयः परस्मैपदिन इत्यर्थः।

ऊर्णुञ् आच्छादने। ३०। ऊर्णोति ऊर्णौति ऊर्णुते। प्रोर्णुनाव प्रोर्णुनुवे। प्रौर्णोत् प्रौर्णुत। प्रौर्णावीत् प्रौर्णवीत् प्रौर्णुवीत् प्रौर्णुविष्ट प्रौर्णविष्ट।

---

(10) अयमिदिदिति मैत्रेय इति केवलं माधवीयधातुवृत्तौ हि दृश्यते। मत्रस्माभिः संगृहीतेष्वेकस्मिन्नपि पुस्तके। इदित्त्वे वृङ्क्ते। ववृञ्जे। वृञ्जिता। अवृङ्क्त। अवृञ्जिष्ट। विवृञ्जिषते। वरीवृञ्जाते। वृञ्जयति। अववृञ्जत् इति रूपाणि।

ऊर्णुनूषति ऊर्णुनविषति ऊर्णुनुविषति । ऊर्णोनूयते । ऊर्णावयति । और्णुनवत् । (11) ऊर्णुत्वा प्रोर्णुत्य । प्रोर्णुतः । ऊर्णा । ऊर्णायुः । इति उभयतोभाष इत्युभयपदी अयम् । उदात्ताश्च चक्षिङ् प्रभृतयः ।

द्यु अभिगमने । ३१ । द्यौति । द्युतः । द्युवन्ति । दुद्याव । द्योता । द्यौतु ।

षु प्रसवैश्वर्य्ययोः । ३२ । सौति । सुषाव । सोता । सवतीति भ्वादिपाठात् ।

कु शब्दे । ३३ । कौति । चुकाव । कोता । चोकूयते । कुवतेरपि चोकूयत इति । कवतिरव्यक्ते शब्दे । कुवतिरार्त्तस्वरे । कौतिः शब्दमात्र एवेत्याभिधानव्यवस्था । (12) कोकूयत इति भौवादिकस्य कवतेरेवाभ्यासस्य चुत्वप्रतिषेध इष्यते । अनिड़य मिति रौतिना सह नोपदिश्यते । इति परस्मैभाषा इति । द्युप्रभृतयः परस्मैपदिनः ।

ष्टुञ् स्तुतौ । ३४ । स्तौति स्तुते । तुष्टाव तुष्टुवे । स्तोता । अस्तावीत् अस्तोष्ट । तुष्टूषति तुष्टूषते । स्तुत्यम् । स्तुतः । स्तवः । प्रस्तावः । संस्तावश्छन्दोगानाम् । तु इति सौत्रो धातुर् वृद्ध्यर्थः । हिंसार्थ इत्येके । तौति तवीति । छान्दसो ऽयमित्यापिशलिः ।

ब्रूञ् व्यक्तायां वाचि । ३५ । ब्रवीति ब्रूते आह । ब्रूतः ब्रुवाते आहतुः । ब्रुवन्ति ब्रुवते आहुः । ब्रवीषि ब्रूषे आत्थ । ब्रूथः ब्रुवाथे आहथुः । उच्यते । उवाच ऊचे । ऊचतुः ऊचाते । ऊचुः ऊचिरे । अवोचत् अवोचत । अवाचि ब्रूते कथा स्वयमेव । "स्वयमवोचत्तु कथा स्वतः । (13)" उक्तः । उक्त्वा । उक्तिः । इति एतौ उभयतो भाषौ इति । उभयपदिनौ इत्यर्थः ।

इण् गतौ । ३६ । एति । इतः । यन्ति । इयाय । ईयतुः । ईयुः । अगात् । गमयति । आययति । जिगमिषति । इषिषति । इत्यः । इति अयं परस्मैभाषः । परस्मैपदी इकारान्तोऽयम् । इकः पूर्वेण वा परेण वा निर्द्दिष्टव्ये पृथगस्य परस्मैपदिनो निर्देश इङिकोर्भेदार्थः । तौ ह्यधिपूर्वकावेव प्रयुज्येते । अयन्तु केवलोऽन्योपसर्गपूर्वोऽपि ।

---

(11) भट्टोजिमते तु और्णूनवदिति अभ्यासदीर्घत्वम् ।

(12) अव्यक्ते कवतिः शब्दे कौतिः स्याच्छब्दमात्रके ।
आर्त्तस्वरे तु कुवतिरित्याहुः शब्दकोविदाः ॥१॥ इति ।

(13) शुद्धे कर्मणि यक्चिणौ । उच्यते । अवाचि । इति । कर्मकर्त्तर्य्येव तयो र्लोपः ।

इङ् अध्ययने । ३७ । अधीते । अधीयाते । अधीयते । अधिजगे । अधिजगाते । अध्यगीष्ट अध्यैष्ट । अध्यैष्यत अध्यगीष्यत । अध्यापयति । अध्यापिपत् अध्यजीगपत् । अधिजिगापयिषति अध्यापिपयिषति । अधिजिगांसते । अधीयानः । अधीयन् पारायणम् । अधीतः । अधीत इति अध्यायकः । अध्यापयतीति अध्यापकः । ण्यन्ताण्ण्वुल् । कठश्चासावध्यापकश्चेति कठाध्यापकः । ब्राह्मणाध्यापक इति याजकादिभिश्चेति (२।२।९) कारकषष्ठीसमासः । अयमात्मनेभाषः । आत्मनेपदीत्यर्थः ।

इक् स्मरणे । ३८ । ककारोऽधीगर्थदयेशां कर्मणीति (२।३।५२) विशेषणार्थः । अध्येति । अधीतः । अधीयन्ति । केचित्तु इणो यणिति (६।४।८१) यणादेशमिच्छन्ति । अधियन्ति । (14) अधीयाय । अध्यगात् ।

वी गतिप्रजनकान्त्यसनखादनेषु । ३९ । वेति । वीतः । वियन्ति । विवाय । विव्यतुः । विव्युः । वेता ।

या प्रापणे । ४० । याति । प्रणियाति । ययौ । याती यान्ती । यायावरः ।

वा गतिगन्धनयोः । ४१ । वाति । ववौ । वाजयति वापयति । निर्वाणः निर्वातः ।

भा दीप्तौ । ४२ । भाति । बभौ ।

ष्णा शौचे । ४३ । स्नाति । सस्नौ । सिष्णासति । सिष्णापयिषति । निष्णातः । प्रतिष्णातं सूत्रम् । नदीष्णः ।

श्रा पाके । ४४ । श्राति । शश्रौ । श्रृतं क्षीरम् । श्राणा यवागूः ।

द्रा कुत्सायां गतौ । ४५ । द्राति । प्रणिद्राति । दद्रौ । निद्रा । निद्राणः । निद्रालुः ।

---

(14) इणो यण्नित्यत्र (६।४।८१) णकारोच्चारणमिङिकोर्निवृत्त्यर्थमिति न्यासकारः । ये तु इण्वदिक इति (२।४।४५, वा) सार्वधातुकार्धधातुकयोः सामान्येनातिदेशमिच्छन्ति तेषां मते इङ एव निवृत्त्यर्थम् । इकस्तु भवितव्यमेव यणा । अधियन्ति । अधियन् । मतान्तरे त्वार्धधातुक एव यण् । अधीयाय । मतु सार्वधातुके अधीयन्ति । ‘समीतयो राघवयोरधीयन्निति भट्टिः । अधिगमयति । अधिजिगमिषति ।

प्सा भक्षणे । ४६ । प्साति । प्रणिप्साति । पप्सौ । अप्सासीत् । अप्सासिष्टाम् । प्सातः । द्रप्सः । (15)

पा रक्षणे । ४७ । पाति । पायते राज्ञा लोकः । पपौ । अपासीत् । पालयति । पायः । पायकः ।

रा दाने । ४८ । राति । व्यतिराते । व्यतिरासे । व्यतिरे । ररौ ।

ला आदाने । ४९ । लाति । व्यतिलाते । ललौ । लाता । अलासीत् ।

दाप् लवने । ५० । दाति । प्रणिदाति प्रनिदाति । दायते वृक्षस्तक्ष्णा । ददौ । अदासीत् । दापयति । दातं बर्हिः । दात्रम् ।

ख्या प्रकथने । ५१ । ख्याति । चख्यौ । अख्यत् । चक्षिङः ख्याञिति (२।४।५४) ख्याञादेशे आचख्ये आचख्यौ । इत्यत्राकर्त्रभिप्राये क्रियाफले आत्मनेपदं मा भूदिति । कर्त्रभिप्राये तङ् यथा स्यात् ।

प्रा पूरणे । ५२ । प्राति । पप्रौ । प्रायः ।

मा माने । ५३ । माति । मीयते । ममौ । मितम् ।

वच भाषणे । ५४ । वक्ति । वक्तः । वच्मि । वच्मि । अन्तवचनस्यानभिधानमाचक्षते । उवाच । ऊचतुः । ऊचुः । उवक्थ उवचिथ । वक्ता । अवोचत् अवोचताम् । अवोचन् । ब्रुवो वचिरित्यादेशे (२।४।५३) उभि अवोचत् अवोचत । प्रवचनीयो देवदत्तः प्रवचनीयं देवदत्तेन । वाक् । वाचौ । इति अनुदात्ता इति । द्यौतिप्रभृतयः ।

विद ज्ञाने । ५५ । वेत्ति वेद । विवेद विदाञ्चकार । संविद्रते संविदते । वेदिता । वेत्तु विदाङ्करोतु । (16) विदितम् । ब्राह्मणवेदं भोजयति ।

अस भुवि । ५६ । अस्ति । स्तः । सन्ति । असि । स्थः । स्थ । स्मः । व्यतिसे । व्यतिहे । व्यतिस्वहे । व्यतिस्महे । इह नित्यत्वादेत ऐ इति (३।४।९३) ऐकारादेशे ह एतीति (७।४।५२) न भवति । व्यत्यसै । व्यत्यसावहै । व्यत्यसामहै । अस्तु एधि । असानि । असाव । असाम । आसीत् । आस्ताम् ।

---

(15) द्रवणेन प्सानीयो द्रप्सः । घञर्थे कः । पृषोदरादित्वाद् द्रादेशः ।

(16) वक्त्रं संवृणु नाचलेन चपले पङ्केरुहस्यास्य वा तत्त्वं वीक्ष्य विदांकरोतु भगवानभोजिनीवल्लभ इति ।

आसन्। बभूव। अभूत्। सन्। कारयामासविदामासेत्यनुप्रयोगे भूभावो नेष्यते। (17) केचिदनुप्रयोगादन्यत्रापि नेच्छन्ति। (18)

मृजू शुद्धौ। ५७। मार्ष्टि। मृष्टः। मृजन्ति मार्जन्ति। ममार्ज। ममार्जतुः ममृजतुः। ममार्जुः ममृजुः। मार्जिता मार्ष्टा। मार्ष्टु। मृष्टाम्। मृड्ढि। अमार्ट्। अमृष्टाम्। अमार्जीत् अमार्क्षीत्। मिमार्जिषति मिमृक्षति। मृज्यः मार्ग्यः। मृजा। तुन्दपरिमृजः तुन्दपरिमार्जः। अपामार्गः। अहिमार्गः।

रुदिर् अश्रुविमोचने। ५८। रोदिति। रुदितः। रुदन्ति। रुरोद। रुरुदतुः। रुरुदुः। रोदिता। अरोदीत् अरोदत्। अरुदत् अरोदीत्। रुदित्वा। रुरुदिषति। रुद्रः। रुद्राणी।

इति उदात्ता इति विदिप्रभृतयः।

ञिष्वप् शये। ५९। स्वपिति। सुष्वाप सुषुपतुः। स्वप्ता। सुस्वप्ता। सुप्तमस्य। सुषुप्सति। सोषुप्यते। असूषुपत्। सुष्वापयिषति। स्वप्नः। स्वप्नक्। अनुदात्तोऽप्ययं रुदादिकार्य्यानुरोधेन चात्र पठ्यते।

श्वस प्राणने। ६०। श्वसिति। शश्वास। श्वसिता। अश्वसीत्। विश्वासः। श्वस्तः श्वसितः। श्वसनः। चमूष् सहन इति घटादिपाठेनैव सिद्धे षित्त्वं ज्ञापकमनित्यं गणकार्य्यमिति। तेन न विश्वसेत् पूर्वविरोधितस्येति शपो लुङ् न भवतीति व्याचक्षते। भट्टिकाव्ये च प्रयोगो दृश्यते "आश्वसेयुर्निशाचरा" इति।

अन च। ६१। प्राणन इत्यपेक्षते। प्राणिति। प्राण। प्राणिणत्। प्राणिणिषति। अपानः। प्राणितः।

जक्ष भक्षहसनयोः। ६२। जक्षिति। जक्षितः। जक्षति। जक्षत्। जक्षती। जक्षः। क्षत्। इति। रुदादिः समाप्त इत्यर्थः।

जागृ निद्राक्षये। ६३। जागर्त्ति। जागृतः। जाग्रति। जागर्य्यते।

---

(17) अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्त्तुर्वचनात् समीपिण इति हि अत उत् (५।४।११३) सूत्रे वार्त्तिकम्।

(18) प्रादुरास बहुलसपाच्छविरित्यादौ यथा। पूर्वन्त्वयमसते रासेत्याह।

जागर्यात् । जागर्य्यात् । जजागार जागराञ्चकार । जजागरतुः जागराञ्चक्रतुः । जागरिता । अजागरीत् । अजागः । जागरयति । जाग्रत् । जाग्रती । जागरितः । जागरः जागरूकः । जागर्य्या जागरा ।

दरिद्रा दुर्गतौ । ६४ । दरिद्राति । दरिद्रितः । दरिद्रति । "कलौ सर्वे दरिद्रति ।" दरिद्रिता । दिदरिद्रासति दिदरिद्रिषति । दरिद्रत् । दरिद्रती । दरिद्राणम् । दरिद्रायकः । दरिद्रः । दारिद्री ।

चकास्ट दीप्तौ । ६५ । चकास्ति । चकास्तः । चकासति । चकासाञ्चकार । अचकासीत् । अचीचकासत् अचचकासत् । चकासत् । चकासती । चकासति कुलानि चकासन्ति कुलानि ।

शासु अनुशिष्टौ । ६६ । शास्ति । शिष्टः । शासति । शासिता । शास्तु । शाधि । शासानि । अशिषत् । अशशासत् । शासित्वा शिष्ट्वा । शासनम् । शिष्टिः । शिष्टः । शास्तिरित्यौणादिकम् । वसेस्तिरिति ( उण्, ४।६१८ ) उणादौ योगविभागात् तिप्रत्ययः । इति परस्मैभाषा इति । इक् स्मरण इत्यादयः ।

दीधीङ् दीप्तिदेवनयोः । ६७ । दीधीते । दीधीः । दीधितिः । दीधिता । दीधितम् ।

वेवीङ् वेतिना तुल्ये । ६८ । वेवीते । वेविता । एतौ छान्दसाविति भाष्यकृदिच्छति । इति आत्मनेभाषावित्यात्मनेपदिनौ । इदिति जक्षित्यादि परिसमाप्तेः ।

षस षस्ति स्वप्ने । ६९।७० । सस्ति । ससास । सेसतुः । सेसुः । सस्यम् । सस्यको मणिः । संस्ति । संस्तः । स्कोरिति (८।२।२९) संयोगादिलोपोऽत्र नेष्यते । बहूनां समवाये द्वयोः संयोगसंज्ञा न । संस्तन्ति । संस्तिता ।

वश कान्तौ । ७१ । वष्टि । उष्टः । उशन्ति । वक्षि । उश्यते । वावश्यते । उशितः । वशः । वश्यः । उशीरम् । इति उदात्ता इति श्वसप्रभृतयः ।

(1) चर्करीतञ्च (19) । यङ्लुगन्तस्येयं पूर्वाचार्य्यसंज्ञा । यङ्लुगन्ता

(19) इदमस्मिन् गणे गणसूत्रमेकम् ।

श्वादादिकाः परस्मैपदिनो विज्ञेया इत्यर्थः । तेभ्योऽपि शपो लुक् परस्मैपदञ्च । बोभवीति । वावदीति । इति षसप्रभृतयः परस्मैभाषाः ।

ह्नुङ् अपनयने । ७२ । ह्नुते । ह्नुवाते । ह्नुवते । पुत्रायापह्नुते वणिक् । देवदत्तायापह्नुते । देवदत्तमपह्नुते । निजुह्नुवे । ह्नोता । निजुह्नूषते । ह्नुतः । अपह्नुतिः । इति आत्मनेभाषोऽनुदात्तः । अथमात्मनेपदीति पूर्वमुकारान्तमध्येऽजन्तवर्गे नोपदिश्यते । वृदित्यदादिपरिसमाप्तेः ।

इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ
धातुप्रदीपेऽदादीनां वृत्तिः ॥२॥

---

## अथ जुहोत्यादय उच्यन्ते ।

हु दाने । आदानेऽप्येके । १ । जुहोति । जुहुतः । जुह्वति । अत्रादिर्द्विवचननिमित्तेऽचि यणादेशः कृत इति द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावो न प्राप्नोति । ततश्चानच्कत्वाद्द्विर्वचनं भवितुं नार्हतीति न शङ्कनीयम् । कृते हि द्विर्वचने एरनेकाचोऽसंयोगपूर्वस्येत्यनुवृत्तेः ( ६।४।८२ ) हुश्नुवोः सार्वधातुक इति ( ६।४।८७ ) यणादेशविधानात् । जुहाव जुहवाञ्चकार । जुहुवतुः । जुहुवुः । जुहोतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुतां । अजुहवुः । अहौषीत् । अहौष्टाम् । अहौषुः । जुह्वत् । जुह्वतौ । होता । हुतम् । हविः ।

ञिभी भये । २ । बिभेति । बिभीतः बिभितः । बिभ्यति । बिभाय बिभयाञ्चकार । अभैषीत् । भीषयते मुण्डो भापयते वा शरैर्भाययति । भीतमस्य । भयम् । भीतिः । भीः । भियौ । (1)

---

(१) गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वित्यत्र (२।४।७७) केचिद् बिभेतेर्ङसौ निर्देश इत्याहुः । तत्र एरनेकाच इति (६।४।८२ ) यण् । तेनास्य लुङि अभैदित्यादीति च वदन्ति । अतएव मा भैः शशाङ्क मम शीधुनि नास्ति राहुरिति । अन्ये त्वेतन्न सहन्ते । तथाच भट्टिः मास्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिरिति । मा भैषीः पुत्रि सीते व्रजति मम पुरो नैष दूरं दुरात्मेति च महानाटके । वस्तुतस्तु मा भैरित्यादि पदं प्रामादिकमेवेति बहवः । एकान्ततः समर्थनाग्रहे त्वागमशास्त्रमनित्यमिति यथा कथञ्चित् समाधेयम् ।

क्री लज्जायाम् । ३ । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्राय जिह्रयाञ्चकार । ह्रेता । अह्रैषीत् । ह्रयः । ह्रीणः ह्रीतः । ह्रीः ।

पॄ पालनपूरणयोः । ४ । पिपर्त्ति । पिपृतः । पिप्रति । पपार । पप्रतुः । पप्रुः । पर्त्ता । पृणाति पूर्त्तमिति क्र्यादिपाठात् । दीर्घान्तं केऽपि पठन्ति । पिपर्त्ति । पिपूर्त्तः । पिपूरति । एते परस्मैभाषा इति परस्मैपदिनः ।

डुभृञ् धारणपोषणयोः । ५ । बिभर्त्ति । बिभृते । बिभृतः बिभ्राते । बिभ्रति बिभ्रते । बभार बिभराम्बभूव बिभरामास बिभराञ्चकार बभ्रे बिभराञ्चक्रे । बिभ्रत् । बिभ्रती । अबिभः अबिभृत । अबिभृताम् अबिभ्राताम् । अबिभरुः अबिभ्रत । भर्त्ता । भरिष्यति । भृत्यः । भार्य्या । भारः । भरणम् । भृत्वा । भृतिः । भृत्रिमम् । भरथुरित्यन्ये (2) । इति उभयतोभाष इत्युभयपदी । भृञामिदिति (७।४।७६) कार्य्यानुरोधेनायमन्येषूभयपदिषु न पठ्यते ।

माङ् माने शब्दे च । ६ । मिमीते । प्रणिमिमीते । मिमाते । मिमते । मीयते । प्रणिमीयते । ममे । ममाते । माता । मित्वा । मितः । धान्यमायः । व्योममायः ।

ओहाङ् गतौ । ७ । जिहीते । जिहाते । जिहते । उद्धायते रविणा । हाता । हात्वा । हानः । हानवान् । इति आत्मनेभाषौ ।

ओहाक् त्यागे । ८ । ककारो हश्च व्रीहिकालयोरिति ( ३।१।१४८ ) सामान्यग्रहणाविघातार्थः । (3) जहाति । जहीतः जहितः । जहति । हीयते । जहौ । जहतुः । जहुः । जहिहि जहाहि जहीहि । जह्यात् । जह्याताम् । अहासीत् । अहासिष्टाम् । सार्थहीनः । हानिः । हित्वा विहाय । इति परस्मैभाषः । आकारान्तप्रकरणानुरोधेन पूर्वं न निर्दिश्यते ।

डुदाञ् दाने । ९ । ददाति दत्ते । दीयते । ददौ ददे । ददतुः ददाते । अददात् अदत्त । अदत्ताम् अददाताम् । अददुः अददत । देहि दत्स्व ।

---

(2) चान्द्रा इमं टुभृञिति पठन्ति ।

(3) अन्यथा एकानुबन्धकत्वादस्यैव ग्रहणं स्यात् । जहाति भावान् जिहीते प्राप्नोति वा हायनो वर्षम् । जहाति जिहीते नीरकं हायनो व्रीहिश्च ।

दद्यात् ददीत । देयात् दासीष्ट । अदात् अदित । अदाताम् अदिषाताम् । अदुः अदिषत । ददत् ददानः । दत्रिमम् । दत्त्वा । प्रदाय । दत्तम् । प्रत्तम् प्रदत्तम् । प्रदः । प्रदा ।

डुधाञ् धारणपोषणयोः । १० । दधाति धत्ते । धत्तः दधाते । दधति दधते । दधासि धत्से । धीयते । विहितम् । संविधानम् । हित्वा विधाय । हित्रिमम् । धान्यम् । (4) दानेऽप्येके "द्विषता विहित"मिति ।

निजिर् शौचपोषणयोः । ११ । नेनेक्ति नेनिक्ते । नेनिक्तः नेनिजाते । नेनिजति नेनिजते । प्रणिनेक्ति । नेक्ता । अनेनेक् अनेनिक्त । अनेनिक्ताम् अनेनिजाताम् । अनेनिजुः अनेनिजत । अनैक्षीत् अनिजत् अनिक्त । नेजयति । अनीनिजत् । प्रणिनिक्षति निनिक्षते । नेनिजत् नेनिजानः । नेनिजतौ नेनिजानौ । निक्तम् । निर्णेजकः । निजम् ।

विजिर् पृथग्भावे । १२ । वेवेक्ति वेविक्ते । विवेज विविजे । वेक्ता । अविजत् अवैक्षीत् अविक्त ।

विष्लृ व्याप्तौ । १३ । वेवेष्टि वेविष्टे । वेविष्टः वेविषाते । वेविषति वेविषते । वेवेष्टु वेविष्टाम् । वेवेषाणि वेविषै । वेष्टा । अविक्षत अविषत् । विषम् । वेषः । वेष्यो नटः । परिवेषः । विष्णुः । इति उभयतो भाषाः । विभाषिता इत्युभयपदिनो डुदाञादयः । लृदिति निजादिपरिसमाप्तेः । लृत्करणमिदं वैचित्र्यार्थम् । णिजां त्रयाणामित्यत्र (७।४।७५) त्रयाणामित्यस्योपादानादिति न्यासः ।

घृ हृ क्षरणदीप्त्योः । १४ । १५ । जघर्ति । जिघर्ति । (5) घरति घारयतीति गणान्तरपाठात् ।

हृ प्रसह्यकरणे । १६ । जिहर्ति । हृतम् । पश्यतोहरः । (6)

---

(4) दधाते र्यन् नुट्श्चेति यत् ( उण्, ५।७२६ ) ।

(5) बहुलञ्छन्दसीतीत्त्वम् । (७।४.७८) घृ इति मान्द्राजपुस्तकद्वये नास्ति । न च माधवभट्टोजिग्रन्थयोः । जघर्त्तीति च वङ्गीयपुस्तके क्वचित् इत्वहीनः पाठः । एवं परत्र च ।

(6) अत्रापीत्त्वम् । अयं सुवोऽभिजिहर्त्ति होमादिति प्रयोगात् ।

ऋ सृ गतौ । १७।१८ । इयर्त्ति । इयृतः । इय्रति । समियृते । समियृाते । आर । आरतुः । आरुः । आरत् । आरताम् । आरन् । (7) समारन्त । इयृयात् । ऐयः । ऐयृताम् । ऐयरुः । ससर्त्ति । ससृतः । ऋच्छति सरतीति भ्वादिपाठात् ।

भस भर्त्सनदीप्त्योः । १९ । बभस्ति । बभस्तः । बभसति । भसितम् । भस्म । नभः । (8)

कि कित ज्ञाने । २०।२१ । चिकेति । चिकितः । चिक्यति । चिकेत्ति । चिकित्तः । चिकितति ।

तुर त्वरणे । २२ । तुतोर्त्ति । तुतूर्त्तः । तुरः । तुरगः तुरङ्गः तुरङ्गमः । तुरितम् । तुतुरति ।

धिष शब्दे । २३ । दिधेष्टि । दिधिष्टः । धिषितम् ।

धन धान्ये । २४ । दधन्ति । धनितम् ।

जन जनने । २५ । जजन्ति ।

गा स्तुतौ । २६ । जिगाति ।

(1) छन्दसीति (9) । इमौ जनगाधातू च्छान्दसा वित्यर्थः । ऋप्रभृतयोऽपिच्छन्दसीत्यनेन सम्बध्यन्त इति केचित् । वृदिति जुहोत्यादिपरिसमाप्तेः ।

इति महामहोपाध्यायश्रीमैत्रेयरचितकृतौ धातुप्रदीपे
जुहोत्यादीनां वृत्तिः ॥ ३ ॥

---

(7) समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागत इति भट्टिः । बहुलञ्छन्दसीत्येव (७।४।७८) सिद्धे अर्त्तिपिपर्त्त्योश्चेति (७।४।७७) इत्वविधानादयं भाषायामपीति सर्वेषां मतम् ।

(8) बभस्तः बभसतीति पाठश्चेत् तर्हि भाषायामयमिति यथा कथञ्चिन्मन्तव्यम् । अन्यथा घसिभसी र्हलि चेति (६।४।१००) च्छन्दसि बब्धः बप्सतीति स्याताम् । वस्तुतस्तु नायं भाषायां प्रयुज्यते ।

(9) इदमस्मिन् गणे गणसूत्रमेकम् ।

## अथ दिवादय उच्यन्ते ।

दिवु क्रीड़ाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिमोदमदस्वप्नगतिषु । १ । दीव्यति । दिदेव । दिदिवतुः । दिदेविषति दुद्यूषति । देवयति । देवः । अक्षद्यूः । दीव्यन्ती । देवित्वा द्यूत्वा । द्यूतम् । आद्यूनः । क्विप् । द्यूः । द्यूवौ । देवा । (1)

षिवु तन्तुसन्ताने । २ । सीव्यति । सिषेव । सिसेविषति सिस्यूषति । सीवनं (2) सेवनम् । स्यूतः । स्यूतिः । सेवित्वा स्यूत्वा । स्यौतिकः । स्योनः ।

स्त्रिवु गतिशोषणयोः । ३ । स्त्रीव्यति । स्त्रूः । स्त्रुवौ । स्त्रुवः । (3)

ष्ठिवु निरसने । ४ । ष्ठीव्यति । तिष्ठेव । तुष्ठ्यूषति तिष्ठेविषति । तेष्ठीव्यते । ष्ठीवतीति भ्वादिपाठात् ।

ष्णुसु अदने । ५ । स्नुस्यति । सुष्णोस । स्नुषा । (4)

ष्णुस निरसन इत्येके । ६ । मित्व । स्नुस्यति । स्नुसयति । असुष्णुसत् । सुस्नुसिषति । सुष्णुसयिषति ।

क्नसु ह्वरणदीप्त्योः । ७ । क्नस्यति । चक्नास । क्नसयति । घञर्थे कः (३।३।५८, वा) । क्नजानीनां के द्वे (६।१।१२, वा) चक्नसः । क्नसित्वा क्नस्त्वा । क्नस्तः ।

वुष दाहे । ८ । वुष्यति । वुव्योष । वुषित्वा व्योषित्वा । व्युषितः ।

प्लुष च । ९ । प्लुष्यति । प्लुषित्वा प्लोषित्वा ।

नृती गात्रविक्षेपे । १० । नृत्यति । ननर्त्त । नर्त्स्यति नर्त्तिष्यति । नृत्यम् । नृत्तम् । नरीनृत्यते । नर्नर्त्ति नर्नृतीति नरिनृतीति नरीनृतीति नरिनर्त्ति नरीनर्त्ति । निनृत्सति निनर्त्तिषति । ईदित्त्वफलमुक्तमेव ।

(1) दिवेर्भूः ( उण्, २।२५६ ) । "स्वामिनौ देवदेवरौ" इति ।

(2) पृषोदरादित्वाद्वा दीर्घं इति माधवः ।

(3) क्वौ ऊठा अनादावुवङ् ।

(4) इगुपधकः । सुषमादित्वात् षत्वम् ।

त्रसी उद्वेगे । ११ । त्रस्यति त्रसति । तत्रास । तत्रसतुः त्रेसतुः । त्रस्तः । त्रस्तवान् ।

कुथ पूतीभावे । १२ । कुथ्यति । चुकोथ । कुथः । कुथितमनेन । प्रकुथितः । कोथित्वा । नोपधात् थफान्ताद्वेति (१।२।२३) नोपधग्रहण-सामर्थ्यान्नित्यमकित्त्वमिच्छन्ति ।

पुथ हिंसायाम् । १३ । पुथ्यति । पुपोथ ।

गुध परिवेष्टने । १४ । गुध्यति । गुधित्वा । जुगोध ।

क्षिप प्रेरणे । १५ । क्षिप्यति । चिक्षेप । क्षेप्ता । अक्षैप्सीत् । क्षिपः । क्षिपकः । क्षिपका । परिक्षेपी । क्षिपते क्षिपतीति तुदादिपाठात् ।

पुष्प विकसने । १६ । पुष्प्यति । पुपुष्प । पुष्पम् ।

तिम ष्टिम ष्टीम आर्द्रीभावे । १७-१९ । तिम्यति । तितेम । तेमयति । स्तिम्यति । तिष्टेम । स्तीम्यति । तिष्टीम ।

व्रीड़ चोदने । २० । लज्जायाञ्चाभिधीयते । व्रीड्यति । विव्रीड़ । व्रीड़ा व्रीला ।

इष गतौ । २१ । इष्यति । इयेष । प्रेषिता । प्रेषिष्यति । (5) इषितम् । अन्वेषणा । पर्य्येषणा परीष्टिः । एषित्वा । इषु इच्छायाम् । इष आभीक्ष्ण्ये इति गणान्तरे । इच्छति । इष्णाति ।

षह षुह शक्यार्थे (6) । २२।२३ । सह्यति । विषह्यति । ससाह । सेहतुः । सिसाहयिषति । सुह्यति । सुषोह । अधेः प्रसहन इत्यत्र ( १।३।३३ ) सह्यतेः सहते र्वा निर्देश इति शक्तावुपेक्षायाञ्च उदाहृतं तमधिचक्रे इति । (7)

जॄष् झॄष् वयोहानौ । २४।२५ । जीर्य्यति । जजार । जजरतुः जेरतुः । जरिता जरीता । अजरत् अजारीत् । जिजरिषति जिजरीषति जिजीर्षति । जरा । जीर्णम् । जरित्वा जरीत्वा जर्जरः । झीर्य्यति । झरः । निर्झरः । झर्झरः । झरा ।

---

(5) वृद्धिरेचीति (६।१।८८) वृद्धिं बाधित्वा एङि पररूपमिति (६।१।९४) गुणः ।

(6) चक्यर्थ इति माधवादिषु पाठः । चक्यर्थः तृप्तिः । फलानां सुहितः ।

(7) तमधिचक्र इति वृत्तिकारेणोदाहृतम् । तस्मिन् शक्तस्तमुपेक्षाञ्चक्र इति वा तस्यार्थ इति भावः ।

इति परस्मैभाषा उदात्ता एते। च्चिपिस्त्वनुदात्तः। अनिट्प्रकरणेऽजन्तप्रकरणे च तादृशाः परस्मैपदिनो भविष्यन्ति।

षूङ् प्राणिप्रसवे। २६। सूयते। अण्डे अण्डे वा प्रसूयते। प्राणिग्रहण-मतन्त्रम्। अप्राणिप्रसवेऽपि वर्त्तते। सूनं धान्यम्। सुषुवे। सविता सोता। प्रसूनम्। प्रसूनवान्। सूते सुवतीति धात्वन्तरयोः।

दूङ् परितापे। २७। दूयते। दुदुवे। दूनः।

दीङ् क्षये। २८। दीयते। उपदिदीये। उपदाता। दास्यते। अदास्त। दीनः। दिदीषत इति दाधाघ्वदाबित्यत्र (१।१।२०) भाष्ये उदाहृतम्। कालापास्तु दीङः सनीत्यात्त्वमिच्छन्तो दिदासत इत्युदाहरन्ति (8)। देदीयते। दीत्वा उपदाय।

डीङ् विहायसा गतौ। २९। डीयते। डिड्ये। उड्डीनः। डयतेः परस्य निष्ठाप्रत्ययस्य कित्त्वप्रतिषेध इडागमश्चेष्यत इति डयितो डयितवानिति न्यासादौ व्याहृतम्।

धीङ् अनादरे। ३०। धीयते। दिध्ये। धेता। धीत्वा। धीनः। दिधीषते।

मीङ् हिंसायाम्। ३१। मीयते। मिम्ये। मेता। मीनः। मीनवान्। मीत्वा। मेतुम्। मित्सते। (9) निमाता प्रमातेति मिञ्मीञो रूपम्।

रीङ् श्रवणे। ३२। रीयते। रिर्ये। रीणः।

लीङ् श्लेषणे। ३३। लीयते। लिल्ये। विलेता विलाता। विलेष्यते विलास्यते। जटाभिरालापयते। घृतं विलीनयति विलाययति विलापयति विलालयति। लिलीषते। लीनः। विलयः। विलाय विलीय लीत्वा। लीनातीति क्र्यादिपाठात्।

व्रीङ् वृणोत्यर्थे। ३४। व्रीयते। विव्रिये। व्रयः। व्रीणः। (1) स्वादय ओदितः (10)। ओदित्त्वस्य फलमोदितश्चेति (८।२।४५) निष्ठानत्वम्।

---

(8) दिदासत इति ब्रुवत इति ङपुस्तके पाठः। तच्चापाणिनीयम्। इको झलिति (१।२।९) सनः कित्त्वादेज्विषयाभावादत्व नास्त्वम्। एवमुपदित्सत इत्यपि न दीङो रूपम्। सूत्रवार्त्तिकभाष्यविरोधात्।

(9) अन्ये तु मिमीषत इत्येव सनिरूपम् इस् भावस्तु मीनातिमिनोत्योरेवेत्याहुः।

(10) इदमस्मिन् नये गणसूत्रमेकम्।

पीङ् पाने । ३५ । पीयते । पिप्ये । पेता । पीतम् । पेयम् । आपीय ।

माङ् माने । ३६ । मायते । मीयते । ममे । मित्सते । मितम् ।

ईङ् गतौ । ३७ । ईयते । अयाञ्चक्रे । केचिद्दग्रपदेशिवद्भावमनादृत्याऽऽमोऽभावमाहुः । ईये । ईयाते । ऐष्ट । ऐषाताम् । उपेयम् । यत् । इणस्तु उपेत्यम् ।

प्रीङ् प्रीतौ । ३८ । प्रीयते । पिप्रिये । प्रियः । प्रीणातीति क्रैयादिकस्य प्रीञो रूपम् । इति आत्मनेभाषा एते । दीङादय आत्मनेपदिनो डीङ्वर्जमनुदात्ताः । (11)

शो तनूकरणे । ३९ । श्यति । श्यतः । शशौ । शशतुः । अशात् अशासीत् । शाययति । निशातं निशितम् । शात्वा शित्वा ।

छो छेदने । ४० । छ्यति । छ्यतः । चच्छौ । अपचाच्छायते । चिच्छासति । छाया । छात्वा छित्वा । अवच्छितम् अवच्छातम् ।

षो अन्तकर्मणि । ४१ । स्यति । अभिष्यति । प्रणिष्यति । सीयते । स्यतु । स्यताम् । स्य । अतो हेरिति (६।४।१०५) हेर्लुक् । स्यानि । स्येत् । अवसितम् । सित्वा अवसाय ।

दो अवखण्डने । ४२ । द्यति । प्रणिद्यति । ददौ । देयात् । अदात् । देदीयते । दित्सति । दित्वा अवदाय । दितम् । परीत्तम् । निर्दितम् । इति परस्मैभाषाः । एते परस्मैपदिनः ।

जनी प्रादुर्भावे । ४३ । जायते । जज्ञे । जनिता । अजनि अजनिष्ट । जाजायते जञ्जन्यते । जिजनिषते । जनयति । जातः । जातिः । जनः । जनता । जन्यो घटः । जन्यं घटेन । जन्या । जन्तुः । प्रजनः । प्रजनिष्णुः । प्रजा । सुप्रजाः । सुप्रजसौ । बीजम् ।

दीपी दीप्तौ । ४४ । दीप्यते । दिदीपे । दीपिता । अदीपि अदीपिष्ट । अदीदिपत् अदिदीपत् । दीप्तः । दीप्तिः । प्रदीपः । दीप्रः ।

---

(11) प्रकाममप्रीयत यज्वनां प्रिय इति माघेऽस्य प्रयोगः ।

पूरी आप्यायने। ४५। पूर्य्यते। पुपूरे। पूरणम्। पूरः। पूः। पूर्णम् पूरितम्। पूर्त्तिः। पूर्णिमा।

तूरी त्वरणहिंसयोः। ४६। तूर्य्यते। तुतूरे। अतूरिष्ट। तूर्णः। तूर्य्यम्।

धूरी गूरी हिंसागत्योः। ४७।४८। धूर्य्यते। दुधूरे। धूर्णः। गूर्य्यते। जुगूरे। गूर्णः।

घूरी जूरी हिंसावयोहान्योः। ४९।५०। घूर्य्यते। जुघूरे। घूर्णम्। जूर्य्यते। जुजूरे। जूर्णः।

शूरी हिंसास्तम्भनयोः। ५१। शूर्य्यते। शुशूरे। शूर्णः।

चूरी दाहे। ५२। चूर्य्यते। चुचूरे। चूरिता। चूर्णम्।

तप ऐश्वर्य्ये वा। ५३। तप्यते। तेपे। तप्ता। तपतेरैश्वर्य्यार्थे दैवादिकत्वम्। आत्मनेपदित्वञ्च। वाग्रहणादैश्वर्य्येऽपि तपतीत्येके। पत इति चैके। पत्यते पतति। (12) अपरे तु वावृतु वरण इति परस्मिन् वाग्रहणं सम्बध्य धातुमेकार्थमनेकाचं मन्यन्ते वावृतु वरण इति वावृत्यते। "ततो वावृत्यमानासौ रामशालां न्यविक्षते"ति। (13)

वृतु वरणे। ५४। वृत्यते। ववृते। वर्त्तित्वा वृत्त्वा। वृत्तम्।

क्लिश उपतापे। ५५। क्लिश्यते। चिक्लिशे। क्लेशिता। क्लिष्टः क्लिशितः। क्लेश्यम्। क्लेशः। क्लिशित्वा क्लिष्ट्वा। क्लिश्नातीति क्लिशू विबाधन इति क्र्यादिपठितस्य।

काशृ दीप्तौ। ५६। काश्यते। चकाशे। अचकाशत्। काशत इति भ्वादावुक्तः।

वाशृ शब्दे। ५७। वाश्यते। ववाशे पक्षी। अववाशत्। वाशितम्। इति आत्मनेभाषा अनुदात्तेत इति। एते जनीप्रभृतयः।

मृष तितिक्षायाम्। ५८। मृष्यते मृष्यति। परिमृष्यति। ममर्ष ममृषे। मर्षितः। अपमृषितम्। दुर्मर्षणः। अमर्षणः।

---

(12) अत्रापि ऐश्वर्य्ये तङ्श्यनौ वा। पचे शप् परस्मैपदञ्च।

(13) अनेकाच्त्वाल्लिटि आम्। वावृताञ्चक्रे।

ईशुचिर् पूतीभावे । ५९ । शुच्यति शुच्यते । शुशोच शुशुचे । अशुचत् अशोचीत् अशोचिष्ट । शुचित्वा शोचित्वा । शुशुचिषति शुशोचिषति । शुक्तम् । शुक्तिः । शोचतीति शुच शोक इत्यस्य रूपम् ।

णह बन्धने । ६० । नह्यति नह्यते । प्रणह्यति । ननाह नेहे । नेहतुः नेहाते । नद्धा । नत्स्यति नत्स्यते । समनात्सीत् समनद्ध । समनाद्धाम् समनात्साताम् । समनात्सुः समनत्सत । निनत्सति निनत्सते । नानह्यते । नद्ध्री । उपानत् उपानहौ । सन्नह्यतेऽनेनेति सन्नाहः । नद्धम् । नद्धुम् । नद्धा प्रणह्य ।

रन्ज् रागे । ६१ । रज्यति रज्यते । ररञ्ज ररञ्जे । रक्तम् । रङ्क्तुम् । रङ्क्त्वा रक्त्वा । रजति रजत इति भ्वादिपाठात् ।

शप आक्रोशे । ६२ । शप्यति शप्यते । शपति शपत इति भ्वादिपाठात् ।

इति उभयतोभाषाः । उभयपदिन एते मृषप्रभृतयः । णहादयस्त्वनुदात्ताः ।

पद गतौ । ६३ । पद्यते । पेदे । पत्ता । पदनः । पादुका (14) । पादः । सम्पत् । सम्पत्तिः । विपादिका । पदम् । उपपादकः । उपपादुकः । उत्पन्नः ।

खिद दैन्ये । ६४ । खिद्यते । चिखिदे । खेत्ता । खित्त्वा । खिन्नः । खेदः । खिन्ते इति रौधादिकस्य ।

लिश अल्पीभावे । ६५ । लिश्यते । लिलिशे । लेष्टा । लेक्ष्यते । अलिक्षत । लेशो मात्रा । लिशतीति तौदादिकस्य ।

विद सत्तायाम् । ६६ । विद्यते । विविदे । वेत्ता । विन्नः । निर्विण्णः ।

बुध अवगमने । ६७ । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । अबोधि अबुद्ध । अभुत्साताम् । अभुत्सत । माणवकं धर्म्मं बोधयति । बोधति बोधत इति भौवादिकस्य ।

युध संप्रहारे । ६८ । युध्यते । युयुधे । योद्धा । युयुत्सते । योधः ।

अनो रुध कामे । ६९ । अनो उपसर्गे रुधेः कामवृत्ते दिवादित्वमात्मनेपदित्वञ्च । अनुरुध्यते । अनुरुरुधे । अनुरोद्धा । अनुरोधः ।

---

(14) णित्कसिपद्यर्त्तेरिति (उण् १।८५) पद्यते रुः । पादूः । ततः संज्ञायाञ्चेति (५।३।९७) कन् । टाप् । केऽण इति ह्रस्वः । (७।४।१३) पादुका ।

अन प्राणने। ७०। अन्यते। आने। अनिता। अनतीति श्वादौ रूपम्। (15)

मन ज्ञाने। ७१। मन्यते। मेने। मन्ता। मत्वा। मतमस्य। मतिः। दर्शनीयमानी भार्य्यायाः। शूरम्मन्यः शूरमानी। मनः।

युज समाधौ। ७२। युज्यते। युयुजे। योक्ता।

सृज विसर्गे। ७३। सृज्यते। ससृजे। स्रष्टा। असृष्ट। (16) इति आत्मनेभाषाः।

राधोऽकर्मकाद्वृद्धावेव। ७४। वृद्धिग्रहणमकर्मकक्रियोपलक्षणम्। अतएव सकर्मकक्रियाव्यावृत्तयेऽकर्मकादित्युक्तम्। एवकारेण च सकर्मकक्रियाव्यावृत्ति-र्द्योत्यते। राध्यति तरुणता। राध्यत्योदनः स्वयमेव (17)। देवदत्ताय राध्यति। "यन्मह्यमपराध्यति" (18)। राद्धा। रात्स्यति। अरात्सीत्। सकर्मकत्वे वृद्धेरन्यत्र राध्नोति।

व्यध ताड़ने। ७५। विध्यति। विव्याध। विविधतुः। व्यद्धा। व्यत्स्यति। अव्यात्सीत्। अव्याद्धाम्। विव्यत्सति। वेविध्यते। व्याधः। विद्धा। मृगावित्। व्यधः। उपव्याधः।

पुष पुष्टौ। ७६। पुष्यति। पुपोष। पोष्टा। पोक्ष्यति। अपुषत्। अपुषताम्। अपोषि। अपुक्षाताम्। व्यत्यपुक्षत। अपूपुषत्। पुपुक्षति। पोपुष्यते। स्वपोषम्। पुष्यः।

शुष शोषणे। ७७। शुष्यति। शुशोष। शोष्टा। शोक्ष्यति। अशुषत्। शुष्कम्।

तुष तुष्टौ। ७८। तुष्यति। तुतोष। तुतुषतुः। तोष्टा। तोक्ष्यति। अतुषत्। तुष्टः।

---

(15) अयं मूर्धन्ययुक्तः पठ्यते। तत्र तवर्गीयान्तकाङ्क्षानुसरणं न भवति। ङपुस्तके अयं दन्त्ययुक्तः। घचिह्नितमान्द्राजपुस्तकेऽपि तथा। गचिह्नित मान्द्राजपुस्तके तु मूर्धन्ययुक्तः।

(16) संसृज्यते सरसिजैररुणांशुभिन्नैरिति रघुकाव्ये प्रयोगः।

(17) कर्मवत्सूत्रेऽयं भाष्यकारस्य प्रयोगः। अत्र हि सिध्यतीत्यर्थः।

(18) न दूये सात्वतीसूनु र्यन्मह्यमपराध्यति। क्रियासमभिहारेण विराध्यन्तं क्षमेत कः इति माघपद्यमिदम्। अपराध्यति द्रुह्यति। विराध्यन्तं द्रुह्यन्तमित्यर्थः।

दुष वैकृत्ये। ७९। दुष्यति। दुदोष। दोष्टा। अदुषत्। दोषयति दूषयति। दोषी। दोषणं दूषणम्। दोषः।

श्लिष आलिङ्गने। ८०। श्लिष्यति। शिश्लेष। श्लेष्टा। श्लेक्ष्यति। अश्लिक्षत् कन्याम्। समाश्लिषज्जतु काष्ठम्। व्यत्यश्लिक्षत। विश्लेषः। (19)

शक विभाषितो मर्षणे। ८१। शक्यति शक्यते। शशाक शेके। शक्ता। शक्ष्यति शक्ष्यते। अशकत् अशक्त। शक्त्वा। शक्तः। शकितः। मर्षणं क्षमा। ततोऽन्यत्र शक्नोतीति। विभाषितेष्वयं न पठ्यते। अशकदिति मर्षणे पुषादिकार्य्यार्थम्। शक्त्यर्थस्य तु कर्त्रभिप्रायेऽकर्त्रभिप्रायेऽप्यशकदिति (20)

ञिष्विदा गात्रप्रक्षरणे। ८२। स्विद्यति। सिष्वेद। स्वेत्ता। स्वेत्स्यति। अस्विदत्। स्विन्नम्। स्विन्नवान्। स्विन्नमस्य। प्रस्वेदितः प्रस्विन्नः। स्वेदः। स्वेदत इति ञिष्विदा स्नेहनमोचनयोरित्यस्य रूपम्।

क्रुध कोपे। ८३। क्रुध्यति। चुक्रोध। क्रोद्धा। क्रोत्स्यति। अक्रुधत्। क्रोधनः। क्रुद्धा। क्रुद्धः। क्रोधः।

क्षुध बुभुक्षायाम्। ८४। क्षुध्यति। चुक्षोध। क्षोद्धा। क्षोत्स्यति। अक्षुधत्। क्षुत्। क्षुधा। क्षुधितः।

शुध शौचे। ८५। शुध्यति। शुशोध। शोद्धा। शोत्स्यति। अशुधत्। विशुद्धः। विशुद्धिः।

षिधु संराद्धौ। ८६। सिध्यति। अभिसिध्यति। सिषेध। सेद्धा। असिधत्। सेधित्वा सिधित्वा सिद्ध्वा। सिद्धम्। सिध्यः। सिद्धिः। अन्नं साधयति। इति नहिप्रभृतयोऽनुदात्ताः अन्यतिवर्जम्।

रध हिंसासंराद्ध्योः। ८७। रध्यति। ररन्ध। ररन्धतुः। ररन्धिव। ररन्धिम। नित्यत्वात् परत्वाच्च नुमि कृते संयोगान्तत्वात् कित्त्वं नास्तीति नलोपाभावः।

---

(19) कर्मणि आलिङ्गने क्सः। अनालिङ्गने तु सिजेव। एकवचने तप्रत्यये चिण्। परत्वात्। अश्लेषि। अश्लिक्षाताम्। अश्लिक्षन्त। अन्यत्र अश्लेषि। अश्लिक्षाताम्। अश्लिक्षत।

(20) शक्नोतेः परस्मैपदित्वात्। ऌदित्त्वात् तस्यापि लुङि कर्तरि अशकदिति भवति। विभाषितो मर्षण इति। शक मर्षणार्थे दिवादिर्भवति। विभाषित इत्युभयपदीत्यर्थः। तन्त्रान्तरप्रसिद्ध्या विभाषित इत्यत्रोच्यते। अयं पटः प्रावरितुं न शक्यत इति मृच्छकटिकेऽस्य कर्तरि प्रयोगः।

अरधत्। लभा। उपलभ्यत इत्यादौ नलोपो भवत्येव। निमित्तस्यानुपघातात्। रधिता रद्धा। रत्स्यति रधिष्यति। अरन्धि। रन्धकः। रन्धनम्। रद्धः।

णश अदर्शने। ८८। नश्यति। प्रणश्यति। ननाश। नेशतुः। नंष्टा नशिता। नङ्क्ष्यति नशिष्यति। अनशत्। नष्ट्वा नंष्ट्वा नशित्वा प्रणश्य। नश्वरः। जीवनाशं नश्यति। प्रनष्टः।

तृप प्रीणने। ८९। तृप्यति। अताप्सीत् अत्राप्सीत् अतर्पीत् अतृपत्। तर्पित्वा तृप्त्वा। तृप्तः। तृप्तिः। स्वादिपाठात् तृप्नोति तृपितः। न्यासकृता तु स्वादावपठितत्वात् तृप्नोतीति चुन्नादिपाठज्ञापकात् साधितम्।

दृप हर्षणमोचनयोः। ९०। दृप्यति। अदृपत् अदार्प्सीत् अद्राप्सीत् अदर्पीत्। दृप्तः। दर्पणः। दर्पकः।

द्रुह जिघांसायाम्। ९१। द्रुह्यति। द्रोहिता द्रोढा द्रोग्धा। ध्रोक्ष्यति द्रोहिष्यति। अद्रुहत्। द्रोहित्वा द्रुहित्वा द्रुग्ध्वा द्रूढ्वा। द्रुग्धं द्रूढम्। मित्रध्रुट् मित्रध्रुक्। द्रोही।

मुह वैचित्त्ये। ९२। मुह्यति। मोग्धा मोढा मोहिता। मोहिष्यति मोक्ष्यति। अमुहत्। मुग्धः मूढः। मुक् मुट्। मोहकः।

ष्णुह उद्‌गिरणे। ९३। स्नुह्यति। सुष्णोह। स्नोग्धा स्नोढा स्नोहिता। अस्नुहत्। सुस्नोहिषति सुस्नुक्षति सुस्नुहिषति।

ष्णिह प्रीतौ। ९४। स्निह्यति। "न च स्निह्यति कस्यचित्"। सिष्णेह। स्नेहिता स्नेग्धा स्नेढा। अस्निहत्। स्निग्धं स्नीढम्। स्निक् स्निट्। उष्णिक्।

वृदिति रधादिपरिसमाप्तेः। रधादयोऽष्टौ गताः। तेभ्यो रधादिभ्यश्चेतीड्विकल्पः (७।२।४५)। अनन्तरं शमादयः। तेषां दीर्घत्वं घिनुण् च। दिवाद्यन्तर्गणस्य पुषादेरिमावन्तर्गणौ। षत्वविधावपि (21) वा द्रुहादीनामिति गणनिर्देशो न क्रियते। वैचित्र्यार्थमित्येके। यङ्लुगनिवृत्त्यर्थमित्यपरे। गणनिर्देशे हि व्यावृत्तिरुच्यते। तथाहि—

(21) वा द्रुहमुहष्णुहष्णिहामिति (८।२।३३) सूत्रेण दादेर्धातोर्घ इत्यनुवृत्तौ (८।२।३२)।

"श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।
यच्चैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि ॥१॥" इति। (22)

शमु उपशमे। ९५। शाम्यति रोगः। शशाम। शमिता। अशमत्। शमी। शमित्वा शान्त्वा। शान्तः। शान्तिः। उपशमः। शमनः। प्रशान् तरति। स्वरादिपाठादव्ययम् प्रशानिति।

तमु काङ्क्षायाम्। ९६। ताम्यति। अतमत्। प्रतान्। प्रतामौ। प्रतामः। तमी। तमिता।

दमु उपशमे। ९७। दाम्यति। अदमत्। अरिं दाम्यतीति अरिन्दमः। "दमित्वाप्यरिसंघातान्" इति भट्टिः। दान्त्वा दमित्वा। दमितः दान्तः। दमी। सकर्मकोऽयमिति शाम्यतिना सह नोपदिश्यते। अस्यार्थनिर्देशे हि ण्यन्तस्य उपशम इति रूपम्।

श्रमु तपसि खेदे च। ९८। श्राम्यति। अश्रमत्। श्रमी। श्रमणः। कुमारश्रमणा। आश्रमः। विश्रमः। विश्राम इति चान्द्राः।

भ्रमु अनवस्थाने। ९९। भ्राम्यति भ्रमति। अभ्रमत्। भ्रमी। भ्रमः। भ्रान्तिः। भ्रमरः। भ्रम्यति अभ्रमीदिति भ्वादिपाठात्।

क्षमू सहने। १००। क्षाम्यति। क्षमिता क्षन्ता। अक्षमत्। क्षमित्वा क्षान्त्वा। क्षान्तिः। क्षमूष् सहन इति भौवादिकस्य। दोषं क्षमते। अक्षमिष्ट अक्षंस्त। क्षमेति। (23)

क्लमु ग्लानौ। १०१। क्लाम्यति। चक्लाम। क्लमिता। अक्लमत्। क्लमी। क्लमः।

मदी हर्षे। १०२। माद्यति। ममाद। मदिता। मदिष्यति। अमदत्। मत्तः। मदनः। मदित्वा। मदः। प्रमदः। प्रमादः। उन्मादी। उन्मदिष्णुः। वृदिति शमादिपरिसमाप्तेः।

असु क्षेपणे। १०३। अस्यति। निरस्यति निरस्यते। आस। आसतुः।

(22) तेनैषां यङ्लुकि दोद्रोग्धि दोद्रोहीति दोध्रोढ़ि, मोमोहीति मोमोग्धि मोमोढ़ि, सोष्णोहीति सोष्णोग्धि सोष्णोढ़ि सेष्णेहीति सेष्णेग्धि, सेष्णेढ़ि। यङि च द्रोद्रुह्यते। सोष्णुह्यते। सेष्णिह्यते इति।

(23) अयं दिवादावषित्। "अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा।"

आसुः। असिता। आस्यत्। निरास्यत् निरास्यत। असित्वा अस्त्वा। अस्तम्। प्रासः। प्रासनी।

यसु प्रयत्ने। १०४। यस्यति यसति। संयस्यति संयसति। प्रयस्यति। यस्यतु यसतु। यस्यात्। यस्य। यस्यानि। अयसत्। यसित्वा यस्त्वा। यस्तः। आयासयते। आयासी।

जसु मोक्षणे। १०५। जस्यति। अजसत्।

तसु प्रक्षेपे। १०६। तस्यति। तस्यतु। तस्य। तस्यानि। अतसत्।

दसु च। १०७। दस्यति। अदसत्। दस्तः दासितः। दस्युः।

वसु स्तम्भे। १०८। वस्यति। वसित्वा वस्त्वा। वस्तम्। उषितमिति निवासार्थस्य। वसितमिति गणान्तरपाठात्।

व्युष विभागे। १०९। व्युष्यति। अव्युषत्। दाहार्थस्य न पुषादित्वम्। अव्योषीत्।

प्लुष दाहे। ११०। प्लुष्यति। अप्लुषत्। प्लोषतेः प्लुष्णातेश्च अप्लोषीदिति।

बिस प्रेरणे। १११। बिस्यति। अबिसत्। बिसम्।

कुस श्लेषणे। ११२। कुस्यति। अकुसत्। कुसितः। कुसितायी।

बुस उत्सर्गे। ११३। बुस्यति। अबुसत्। बुसम्।

मुस खण्डने। ११४। मुस्यति। अमुसत्। मुसलम्। मुष इत्येके। (24)

मसी परिमाणे। ११५। मस्यति। अमसत्। मस्तः। मासः। मसूरम्।

लुट विलोडने। ११६। लुट्यति। अलुटत्। लोटतीति भौवादिकस्य। लोट्यतीति धात्वन्तरे दर्शितम्। (25)

उच समवाये। ११७। उच्यति। उवोच। ऊचतुः। औचत्। मा भवानुचत्। औचिचत्। मा भवानुचिचत्। उचिचिषति। औचित्वा। उचितम्। उक्वः। (26)

(24) आत्रेयो दुर्गश्चेमं मूर्धन्यान्तं पपाठ। "राघवस्यामुषः कान्ताम्" इति भट्टिप्रयोगश्चात्रेयेणोदाहृतः।

(25) लोट्यतीति कण्ड्वादियगन्ताद्रूपम्।

(26) उक्वादयश्चेति (उण॰ ४।५३४) चस्य कत्वं गुणाभावश्च। उक्वो गर्भाशयः।

भृशु भ्रंशु अधःपतने । ११८ । ११९ । भृश्यति । बभर्श । अभृशत् । भर्शित्वा भृष्ट्वा । भृष्टः । भृशम् । भ्रश्यति । अभ्रशत् । बाभ्रश्यते । भ्रंशः । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टम् । भ्रंशतेस्तु अभ्रंशिष्ट अभ्रशत् बनीभ्रश्यत इति रूपम् ।

कृश तनूकरणे । १२० । कृश्यति । अकृशत् । कृशित्वा कर्शित्वा । कृशः । कृशिमा । क्रशीयान् । क्रशिष्ठः । कार्श्यम् । कृशानुः । कृशानुरेताः ।

वृश वरणे । १२१ । वृश्यति । अवृशत् ।

ञितृषा पिपासायाम् । १२२ । तृष्यति । अतृषत् । तृषित्वा तर्षित्वा । तृषितमस्य । तृष्णक् । तर्षः । तृष्णा । तृट् ।

हृष तुष्टौ । १२३ । हृष्यति । अहृषत् । हृष्टं लोम हृषितं लोम । हृषु अलीक इत्यस्य तु हर्षति अहर्षीदिति ।

रुष रोषे । १२४ । रुष्यति । अरुषत् । रोष्टा रोषिता । रुषित्वा रोषित्वा रुष्ट्वा (27) । रुषितः रुष्टः । रुट् ।

डिप क्षेपे । १२५ । डिप्यति । अडिपत् । डिडेप । डेपः । डिपतीडि तुदादिपाठात् ।

कुप क्रोधे । १२६ । कुप्यति । अकुपत् । कुपितः । कोपः ।

गुप व्याकुलत्वे । १२७ । गुप्यति । अगुपत् । गोपिता ।

युप रुप लुप विमोहने । १२८-१३० । युप्यति अयुपत् । रुप्यति । अरुपत् । लुप्यति अलुपत् ।

लुभ गार्ध्ये । १३१ । लुभ्यति । लुलोभ । लोभिता लोब्धा । अलुभत् । लोभित्वा लुभित्वा लुब्ध्वा । लुब्धः । लोभः ।

क्षुभ सञ्चलने । १३२ । क्षुभ्यति । अक्षुभत् । क्षोभः । क्षोभते क्षुभ्नातीति तु गणान्तरपाठात् । पुषादेः पूर्वमस्य पाठेऽपि न दोषः । अक्षुभदिति द्युतादिपाठेनैव सिद्धेः । न चाक्षोभीदिति सिज्निवृत्त्यर्थम् । क्षुभ्नातेः सिचोऽवश्यम्भावात् । भकारान्तप्रकरणानुरोधेन चेहोपदिश्यते ।

(27) तीषसहलुभरुषरिष इतीड्विकल्पः (७।२।४८) ।

णभ तुभ हिंसायाम्। १३३। १३४। नभ्यति। प्राणभत्। नभः। नभते नभ्नातीति गणान्तरपाठात्। तुभ्यति। अतुभत्।

क्लिदू आर्द्रीभावे। १३५। क्लिद्यति। चिक्लेद। क्लेदिता क्लेत्ता। अक्लिदत्। क्लिन्नम्। चिक्लिदम्। क्लेदित्वा क्लिदित्वा क्लित्त्वा।

ञिमिदा स्नेहने। १३६। मेद्यति। अमिदत्। मिन्नम्। मिदित्वा मेदित्वा। मिन्नमस्य मेदितमस्य। प्रमिन्नः प्रमेदितः। मित्वम्। मेदते अमेदिष्ट इति भ्वादिपाठात्।

ञिक्ष्विदा स्नेहनमोचनयोः। १३७। क्ष्विद्यति। चिक्ष्वेद। क्ष्वेदिता। अक्ष्विदत्। क्ष्विण्णमस्य क्ष्वेदितमस्य। प्रक्ष्विण्णः प्रक्ष्वेदितः। क्ष्वेदितुम्। क्ष्विदित्वा क्ष्वेदित्वा।

ऋधु वृद्धौ। १३८। ऋध्यति। आनर्द्ध। आनृधतुः। अर्धिता। आर्द्धत्। अर्दिधिषति ईर्त्सति। अर्धित्वा ऋद्ध्वा। ऋद्धम्। समृद्धिः। ऋध्नोतीति सौवादिकस्य।

गृधु अभिकाङ्क्षायाम्। १३९। गृध्यति। जगर्ध। गर्धिता। अगृधत्। गर्धित्वा गृद्ध्वा। गृद्धः। गृध्रः। गृध्नुः। गर्द्धनः। इति परस्मैभाषा उदात्तेत इति। राध्यतिप्रभृतयः परस्मैपदिनः। शमादयस्तूदात्ताः।

वृदिति दिवादेः पुषादेश्च परिसमाप्तेः। अन्ये तु पुषादिपरिसमाप्त्यर्थं वृत्करणम्। दिवादयस्त्वपरिसमाप्ता इति चीयते भ्रम्यतीत्यादि सिद्धमित्याचक्षते। (28)

इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ
धातुप्रदीपे दिवादीनां वृत्तिः ॥४॥

---

(28) तामाग्रां पथिकस्तथापि नितरां ध्यायन् मुक्तः चीयत इत्यमरुप्रयोगः।

# अथ स्वादय उच्यन्ते ।

षुञ् अभिषवे । १ । अभिषवः सुरासन्धानं स्नपनं पीड़नं स्नानं मन्थनं तेजनं वा । सुनोति सुनुते । सुन्वे सुनोमि । परत्वाद् गुणे कृते उतश्च-प्रत्ययादित्यनुवृत्तौ (६।४।१०६) लोपश्चास्यान्यतरस्यां म्वोरितुरकारलोपो (६।४।१०७) न भवति । इह तु गुणाभावाद् भवतुरकारलोपः । सुन्वः सुनुवः सुनुवहे सुन्वहेइत्यादि । अभिषुणोति । सुषाव सुषुवे । सोता । अभिसोष्यति । अभ्यषुणोत् । असावीत् असोष्ट । अभिसुसूषति । अभिसुसूः (1) । सुत्वा । सुत्वानो । सोमसुत् । राजसूयम् ।

षिञ् बन्धने । २ । सिनोति सिनुते । सिषाय सिष्ये । सेषीयते । सिसीषति सिसीषते । विषयः । सितम् । सिनो ग्रासः स्वयमेव । सिता पाशेन शूकरी ।

शिञ् निशाने । ३ । शिनोति शिनुते । शिशाय शिश्ये । शेता । शितम् ।

डुमिञ् प्रक्षेपणे । ४ । मिनोति मिनुते । ममौ मिम्ये । मिम्यतुः मिम्याते । माता । मास्यति मास्यते । मिनुयात् मिन्वीत । मीयात् मासीष्ट । अमासीत् अमास्त । मित्सति मित्सते । मेमीयते । प्रमाय । प्रमयः । मित्रिमम् । प्रमाता ।

चिञ् चयने । ५ । चिनोति चिनुते । चिकाय चिचाय चिक्ये चिच्ये । चिकीषति चिचीषति । चेचीयते । चाययति चापयति । चिन्वन् चिन्वानः । कायः । निचयः । सञ्चयः । निकायः । निकाय्यम् । अग्निचित् । चित्रम् । चित्ता । चित्रगुः ।

स्तृञ् आच्छादने । ६ । स्तृणोति स्तृणुते । स्तृणुतः स्तृण्वाते । निस्तर्ता । तिस्तीर्षति । तास्तर्य्यते । स्तृतम् । स्तृत्वा ।

कृञ् हिंसायाम् । ७ । कृणोति कृणुते । चकार चक्रे । चिकीर्षति । चेक्रीयते । कारा बन्धनालयः ।

---

(1) अभिपूर्वात् सुनोतेः सन्नन्तात् क्विप् । अभिसुसूषतीत्यत्र तु सौतिण्योरित्यनेनैव (८।३।६१) षत्व-व्यावृत्तिः स्यात् ।

वृञ् वरणे । ८ । वृणोति वृणुते । ववार वव्रे । वरिता वरीता । विवरिषति विवरीषति वुवूर्षति । वेव्रीयते । वृतम् । वृतिः । वृत्यम् ।

धुञ् कम्पने । ९ । धुनोति धुनुते । अधुनोत् अधुनुत । धोता । अधौषीत् अधोष्ट । धुतम् । "विधुतविपिनराजिः" । न्यासकारस्तु स्वरतिसूतीति सूत्रे (७।२।४४) दीर्घान्तमेतमुक्तवान् । तन्मते धूनोति धूनुते । अधावीत् अधोष्ट अधविष्ट । धूत्वा । धूतः । (2) इति विभाषिता एते ।

टुदु उपतापे । १० । दुनोति । दुदाव । दोता । दुत्वा । दुतः (3) । दवथुः । दवः दावः ।

हि गतौ वृद्धौ च । ११ । प्रहिणोति । प्रहिण्वः प्रहिणुवः । प्रहिण्मः प्रहिणुमः । प्रजिघाय । प्रहिणुयात् । प्राजीहयत् । जिघीषति । जेघीयते । हेतुः । हेयः ।

पृ प्रीतौ । १२ । पृणोति । पपार । पर्त्ता । अपार्षीत् ।

स्पृ प्रीतिपालनयोः । १३ । प्रीतिचलनयोरित्येके । स्पृणोति । पस्पार ।

स्पॄ इत्येके । १४ । स्पृणोति । पस्पार ।

आप्लृ व्याप्तौ । १५ । आप्नोति । आप । आप्ता । आपत् । व्याप्य । प्राप्य प्रापय्य । आप्यम् । आपः (4) ।

शक्लृ शक्तौ । १६ । शक्नोति । शशाक । शेकतुः । शक्ता । अशकत् । शक्तः । शक्यम् । शक्रः ।

राध साध संसिद्धौ । १७।१८ । राध्नोति । रराध । आरराधतुः । आरराधुः । अपरेधतुः । अपरेधुः । राद्धा । रात्स्यति । अरात्सीत् । राध्यतीति वृद्धौ दिवादिः । साध्नोति । साद्धा । सिषात्सति । सिषाधयिषति । साधुः । (5) इति परस्मैभाषाः । एते दुप्रभृतयः परस्मैपदिनः । अनुदात्ताः स्वादयः वृञ्धूञ्वर्जम् ।

---

(2) ऊर्द्धं धूनोति वायुर्विवृतशवशिरः श्रेणिकुञ्जेषु इति मालतीमाधवे भवभूतिप्रयोगः ।

(3) दून इति दीर्घस्तु दु द्रु गतावित्यस्य । सानुबन्धकत्वात् । अस्य तु दुतमिति । तथाहि माघः "मृदुतया दुतयाधरलेखये"ति ।

(4) आप्नोतेर्ह्रस्वश्चेति (उण्, २।२१६) औणादिक् क्विप् ।

(5) केचिदिममषोपदेशमाहुः । तदसत् । षोपदेशलक्षणविरोधात् ।

अशू व्याप्तौ । १९ । संघाते च । अश्नुते । व्यानशे । अशिता अष्टा । आशिष्ट आष्ट । अष्टम् । अशाश्यते इति धातुपरायणे अस्यैव यङुदाहृतः । न्यासकारस्तु अश भोजन इत्यस्य यङ्विधौ ग्रहणमिच्छति ।

ष्टिघ आस्कन्दने । २० । स्तिघ्नुते । तिष्टिघे । तिस्तेघिषते तिस्तिघिषते । तिष्टेघयिषति । स्तेघित्वा स्तिघित्वा । आत्मनेभाषावुदात्तौ । एतौ आत्मनेपदिनौ । अथ सेट्प्रकरणपरस्मैपदिनो दर्श्यन्ते ।

तिक तिग च । २१।२२ । चकारेणास्कन्दन इत्यपेक्ष्यते । तिक्नोति । तितेक । तिक्तितम् । तिकः । तैकायनिः । तिग्नोति । तिग्मम् ।

षघ हिंसायाम् । २३ । सघ्नोति । ससाघ । सिसघिषति । सिषाघयिषति ।

ञिधृषा प्रागल्भ्ये । २४ । धृष्णोति । दधर्ष । धर्षिता । धृष्टमस्य । धर्षितं धृष्टः ।

दम्भु दम्भे । २५ । दभ्नोति । ददम्भ । देभतुः । देभुः । ददम्भतु र्ददम्भुरिति केचिदिच्छन्ति । दम्भिता । दिदम्भिषति धीप्सति धिप्सति । दम्भित्वा दब्ध्वा । दब्धः ।

ऋधु वृद्धौ । २६ । ऋध्नोति । आनर्ध । आनृधतुः ।

तृप प्रीणने । २७ । तृप्नोति । ततर्प । तृपितम् । ऋध्यति तृप्यतीति दिवादिपाठात् ।

(1) छन्दसि । (6) छन्दसीतीदमधिकृतमागणपरिसमाप्तेः ।

अह व्याप्तौ । २८ । अह्नोति ।

दघ घातने । २९ । दघ्नोति ।

चमु भक्षणे । ३० । चम्नोति ।

रि क्षि चिरि जिरि दाश दृ हिंसायाम् । ३१-३६ । रिणोति । क्षिणोति । क्षिणोतीति भाषायामप्यस्य प्रयोजनं केचिदिच्छन्ति । पञ्चबाणः क्षिणोतीति(7)

---

(6) इदमेव गणसूत्रमेकम् ।

(7) दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोतीति मेघदूते । न तद्यशः शस्त्रभृतां क्षिणोतीति इमां हृदि व्यायतपातमक्षिणोदिति च कालिदासः ।

कालिदासः । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । इति परस्मैभाषाः । एते तिकप्रभृतयः परस्मैपदिनः । इदिति । स्वादीनां परिसमाप्तिः ।

इति महामहोपाध्यायश्रीमैत्रेयरचितकृतौ धातुप्रदीपे
स्वादीनां वृत्तिः ॥ ५ ॥

---

## अथ तुदादय उच्यन्ते ।

तुद व्यथने । १ । तुदति तुदते । तोत्ता । तुदन् तुदमानः । तुदती तुदन्ती । तोत्रम् । प्रतोदः । अरुन्तुदः ।

नुद प्रेरणे । २ । नुदति । नुदते । प्रणुदते । नुनोद । नोत्ता । नुत्तं नुन्नम् । पुनः परस्मैपदिष्वयं पठिष्यते । कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थम् ।

दिश अतिसर्जने । ३ । दिशति दिशते । दिशतु दिशताम् । अदिशत् अदिशत । दिश्यात् दिक्षीष्ट । अदिक्षत् अदिक्षत । आदिशन् आदिशमानः । दिक् । देशः ।

भ्रस्ज पाके । ४ । भृज्जति भृज्जते । बभर्ज बभ्रज्ज बभ्रज्जे बभर्जे । बभर्जतुः बभर्जाते बभ्रज्जतुः बभ्रज्जाते । बभ्रज्जुः बभ्रज्जिरे बभर्ज्जुः बभर्जिरे । भ्रष्टा भर्ष्टा । बिभ्रक्षति बिभर्क्षति बिभर्जिषति बिभ्रज्जिषति बिभर्क्षते बिभर्जिषते बिभ्रक्षते बिभ्रज्जिषते । बरीभृज्यते । भर्ग्यं भ्रज्ज्यम् । भर्गः भ्रज्जः । भृष्टम् ।

क्षिप प्रेरणे । ५ । क्षिपति क्षिपते । अभिक्षिपति । क्षेप्ता । अक्षैप्सीत् अक्षिप्त । परिक्षेपी । परिक्षेपकः । क्षेपः । क्षिप्यतीति दिवादिषु पाठात् ।

कृष विलेखने । ६ । कृषति कृषते । क्रष्टा कर्ष्टा । अक्राक्षीत् अकार्क्षीत् अकृक्षत् अकृक्षत अकृष्ट । कर्षतीति भौवादिकस्य । इति उभयतोभाषाः स्वरितेतः अनुदात्ताः ।

ऋषी गतौ । ७ । पूर्वोत्तरधातुसाहचर्य्यानुरोधेन (1) पृथगयं परस्मैपदी निर्दिश्यते । ऋषति । ऋषतः । आनर्ष । आनृषतुः । अर्षिता । अर्षिषिषति । ऋष्टः । ऋषिः । इति परस्मैभाषोऽयमुदात्तः ।

जुषी प्रीतिसेवनयोः । ८ । जुषते । जुजुषे । जोषिता । जोजुष्यते । जुजुषिषते जुजोषिषते । जुष्टः । जुष्यः । सजूः । सजुषौ । सजुषः ।

ओविजी भयचलनयोः । ९ । उद्विजते । उद्विजिता । उद्विविजिषते । विजित्वा । विग्नः । विग्नवान् (2) । उद्विजितुम् । करणे घञ् वेगः । वेगितः ।

ओलजी ओलस्जी व्रीडे । १०।११ । लजते । लेजे । लग्नः । लज्जते । ललज्जे । लग्नः । लज्जा । नग्नोऽवासा इति पृषोदरादित्वाद् वर्णविकारेण तवर्गपञ्चमादिः । लजिलज्जयो र्भ्वादिपाठाल्लजते लज्जत इति मध्योदात्तत्वं न स्यात् (3) । इति आत्मनेभाषा अनुदात्तेत उदात्ताः ।

ओव्रश्चू छेदने । १२ । वृश्चति । वव्रश्च । वव्रश्चतुः । व्रश्चिता व्रष्टा । वरीवृश्च्यते । विव्रश्चिषति विव्रक्षति । व्रश्चित्वा । वृक्णः । वृक्तः । मूलपरिवृट् ।

व्यच व्याजीकरणे । १३ । विचति । विव्याच । विविचतुः । विव्यचिथ । विविचिथेति केचित् । व्यचिता । व्याचयति । विव्यचिषति । वेविच्यते । विचितः । विचित्वा । व्याचकः । उरुव्यचाः ।

उछि उञ्छे । १४ । उञ्छति । उञ्छाञ्चकार । उञ्चिच्छिषति । उञ्छती उञ्छन्ती । उञ्छा । भ्वादौ चास्य पाठः स्वरभेदार्थः । (4)

---

(1) पूर्वोत्तरधातुसाहचर्य्यानुरोधेनेति ङपुस्तके पाठः ।

(2) प्रायेणायमुत्पूर्वः । तथा च चक्रन्द विग्ना कुररीव भूय इति कालिदासः । उद्वेजिता वृष्टिभिराश्रयन्त इति तु णिजन्तात् क्तः ।

(3) लजते लज्जत इति यदा तुदादिस्तदा शप्रत्यये प्रत्ययस्वरेण (३।१।३) मध्योदात्तः । यदा तु भ्वादिस्तदा अनुदात्तौ सुप्पिताविति (३।१.४) शपोऽनुदात्तत्वान्नायं मध्योदात्तः । अपि तु तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरि(६।१।१८६)त्यनेन लसार्वधातुकतप्रत्ययस्याप्यनुदात्तत्वे नाद्युदात्तोऽयम् ।

(4) कपोतादिवदेकशो धान्यादिपरिग्रह उञ्छः । उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । तौदादिकस्योञ्छतीत्यस्य प्रत्ययस्वरेण मध्योदात्तत्वम् । धातुस्वरेण भौवादिकस्य त्वाद्युदात्तत्वम् । एवमुच्छतीत्यस्यापि ।

उछी विवासे । १५ । उच्छति । व्युष्टिः । "व्युष्टं कल्ये विपाशितें" । अयमपि भ्वादौ पठितः । स्वरभेदाय ।

ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु । १६ । ऋच्छति । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । समृच्छिष्यते । ऋचिच्छिषति ।

मिछ उत्क्लेशे । १७ । मिच्छति । "मिमिच्छ रोगिणं तदा" । मिमिच्छिषति । (5)

जर्च चर्च झर्च परिभाषणसन्तर्जनयोः । १८।२० । जर्चति । चर्चति । चर्चितम् । विचर्चिका । झर्चति । जझर्च । जर्ज झर्झ इत्येके । जर्जति । जर्जरः । झर्झति । झर्झरः ।

त्वच संवरणे । २१ । त्वचति । त्वचः । त्वक् ।

ऋच स्तुतौ । २२ । ऋचति । आनर्च । आनृचतुः । अर्चिता । अर्च्चम् । ऋक् । अर्द्धर्चः अर्द्धर्चम् । अर्चा ।

उब्ज आर्जवे । २३ । उब्जति । उब्जाञ्चकार । उब्जिजिषति । अभ्युद्गः । समुद्गः । न्युब्जः ।

उब्झ उत्सर्गे । २४ । उब्झति । औज्झीत् । उब्जिझिषति । उद्धः । दोपधोऽयम् ।

लुभ विमोहने । २५ । लुभति । लुलोभ । लोभिता लोब्धा । लुभित्वा लोभित्वा । विलुभितः । (6) लुभ्यतीति तु लुभ गार्ध्ये इत्यस्य ।

रिफ कत्थनयुद्धहिंसादानेषु । २६ । रिफति । रिरेफ । नोपधात् तफान्ताद्वेति (१।२।२३) नोपधग्रहणसामर्थ्यान्नित्यमकित्त्वमिच्छन्ति । रेफित्वा । रेफः ।

तृफ तृन्फ तृप्तौ । २७।२८ । तृफति । तर्फिता । तर्फित्वा । तृम्फति । ततृम्फ । तृम्फिता । तृफित्वा तृम्फित्वा ।

तुप तुम्प तुफ तुम्फ हिंसायाम् । २९।३२ । तुपति । तुम्पति । तुफति । तुम्फति । तुपतुम्पग्रहणं भ्वादौ स्वरार्थम् ।

---

(5) उत्क्लेशः पीड़ा ।

(6) लुभो विमोहन इति (७।२।५४) क्त्वानिष्ठयोर्नित्यमिट् ।

दृफ दृम्फ उत्क्लेशे । ३३।३४ । दृफति । दृम्फति । वामनस्तु तृपिदृपी पान्ताविच्छति । यदुक्तं तुदादौ यौ तृपिदृपी तावुदात्तावेवेति ।

ऋफ ऋन्फ हिंसायाम् । ३५।३६ । ऋफति । आनर्फ । आनृफतुः । ऋम्फति । ऋम्फाञ्चकार । ऋम्फिफिषति । ऋम्फित्वा अर्फित्वा ।

गुफ गुन्फ ग्रन्थे । ३७।३८ । गुफति । गुम्फति । गुम्फः ।

उभ उन्भ पूरणे । ३९।४० । उभति । उवोभ । ऊभतुः । उभौ । उभयम् । उम्भति । उम्भाञ्चकार । उम्भिता । उम्भित्वा । उम्भः । कुम्भः । कुम्भी । अयस्कुम्भः ।

शुभ शुन्भ शोभार्थे । ४१।४२ । शुभति । शुशोभ । शुशुभतुः । अशोभीत् । शोभी । शोभत इति भौवादिकस्य । शुम्भति । शुशुम्भ ।

इदित्वतो नुम्विधौ तृम्फादयः समाप्ता इत्यर्थः ।

दृभी ग्रन्थे । ४३ । दृभति । ददर्भ । ददृभतुः । दर्भिता । दर्भः । दृब्धः ।

चृती हिंसाग्रन्थयोः । ४४ । चृतति । चचर्त्त । चर्त्तिता । चर्त्तिष्यति चर्त्स्यति । अचर्त्तीत् । चिचर्त्तिषति चिचृत्सति । चरीचृत्यते । चृत्तम् । चर्त्यम् । यस्य विभाषेत्यनिट्त्वे (७।२।१५) सिद्धेऽस्येदित्त्वेन तस्यानित्यत्वज्ञापनादुधावित इति सिद्धम् । (7)

विध विधाने । ४५ । विधति । विवेध । विविधतुः । वेधिता । वेधित्वा विधित्वा । वेधः । विधिः । (8)

जुड़ गतौ । ४६ । जुड़ति । जुजोड़ ।

मृड़ सुखने । ४७ । मृड़ति । ममर्ड । ममृड़तुः । मर्डिता । मृड़ितः । मृड़ित्वा । मृड़ः । मृड़ानी । मृड्नातीति क्रैयादिकस्य रूपम् ।

पृड़ च । ४८ । पृडति । पपर्ड ।

पृण प्रीणने । ४९ । पृणति । लोकम्पृणः ।

---

(7) ईदित्त्वं यङ्लुगन्तान्निष्ठायामनिट्त्वार्थम् । तेन चरीचृतः चरीचृतवानित्यन्ये ।

(8) भाष्ये त्वन्यथा । तथाहि समर्थसूत्रे (२।१।१) भाष्यम्—"विधिरिति कोऽयं शब्दः ? विपूर्वाद्धाञः कर्मसाधन इकार" इति । स्वरे भेदः । इन्प्रत्ययान्तस्य नित्त्वान् "ञ्नित्यादिर्नित्य"मिति (६।१।१९७) आद्युदात्तत्वम् । किप्रत्ययान्तस्य तु प्रत्ययस्वरेणान्तोदात्तत्वम् ।

मृण हिंसायाम् । ५० । मृणति । मृणितम् । मृणालम् ।

तुण कौटिल्ये । ५१ । तुणति । तुतोण ।

पुण कर्मणि शुभे । ५२ । पुणति । निपुणः । पुण्यम् ।

मुण प्रतिज्ञाने । ५३ । मुणति । मुणितम् ।

कुण शब्दोपकरणयोः । ५४ । कुणति । चुकोण । कोणः । कोणित्वा कुणित्वा । कोणिका ।

शुन गतौ । ५५ । शुनति । शुनकः ।

द्रुण हिंसागतिकौटिल्येषु । ५६ । द्रुणति । दुद्रोण । द्रोणः । द्रोणी । द्रुणः । द्रुणी । कुद्रोणी । विद्रोणम् ।

घुण घूर्ण भ्रमणे । ५७ । ५८ । घुणति । जुघोण । घुणती घुणन्ती । घूर्णति । जुघूर्ण । घूर्णती घूर्णन्ती । घोणते घूर्णत इति भौवादिकयो रूपम् ।

षुर ऐश्वर्य्यदीप्त्योः । ५९ । सुरति । सुषोर । सोरिता । सूर्य्यात् । असोरीत् । सुरः । सुरा ।

कुर शब्दे । ६० । कुरति । कूर्य्यते । चुकोर । कुर्य्यात् (9) । अकोरीत् ।

खुर च्छेदने । खण्डने च । ६१ । खुरति । चुखोर । खोरिता । न्यखोरीत् । खुरः ।

मुर संवेष्टने । ६२ । मुरति । मुरः । मुरारिः ।

क्षुर विलेखने । ६३ । क्षुरति । चुक्षोर । क्षुरः ।

घुर भीमार्थशब्दयोः । ६४ । घुरति । जुघोर । घोरः । घुर्घुरः । (10)

पुर अग्रगमने । ६५ । पुरति । पुरम् । पुरी ।

वृहू उद्यमे । ६६ । वृहति । वर्हिता वर्ढा । वर्हिष्यति वर्क्ष्यति । अवर्हीत् अवृक्षत् । वरीवृह्यते । विवर्हिषति विवृक्षति । वर्हितुम् वर्ढुम् । वृढः । वर्हित्वा वृढ्वा ।

तृहू स्तृहू तृंहू हिंसार्थाः । ६७-६९ । तृहति । तर्हिता तर्ढा । अतर्हीत्

---

(9) हलि चेति (८।२।७७) दीर्घः । न भकुर्छुरामिति (८।२।७९) तु न ह्रस्वः । अत्र करोतेरेव ग्रहणात् ।

(10) कुक्वादीना के द्वे भवत इति (६।१।१२, वा) द्वित्वम् । पृषोदरादित्वाच्च न हलादिशेषः (७।४।६०) ।

अतृचत्। तरीतृह्यते। तर्हित्वा तृढ्वा। तृढः। स्तृहति। तस्तर्ह। स्तर्हिता स्तर्ढा। स्तर्हिष्यति स्तर्क्ष्यति। अस्तर्हीत् अस्तृक्षत्। तिस्तर्हिषति तिस्तृक्षति। तिष्टर्हयिषति। तरीष्टृह्यते। स्तर्हित्वा स्तृढ्वा। स्तृढः। तृंहति। ततृंह। तर्हिता तृण्ढा। तृंहिष्यति तृङ्क्ष्यति। तृह्यात्। अतृंहीत् अताङ्क्षीत्। अतृंहिष्टाम् अताण्ढाम्। तितृंहिषति तितृक्षति। (11) तरीतृह्यते। तृंहित्वा तृण्ढ्वा। तृढः। तृंहणम्।

इषु इच्छायाम्। ७०। उकार स्विषुगमीति (७।३।७७) विशेषणार्थः। (12) इच्छति। इयेष। ईषतुः। ईषुः। एष्टा एषिता। इच्छेत् (13)। इष्टम्। इष्टिः। एषणः। एषणी। "नाराची मेषणीमाहुः।" एषित्वा इष्ट्वा।

मिष स्पर्द्धायाम्। ७१। मिषति। मिमेष। मेषिता। निमेषः। मेषः। मिषः।

किल श्वैत्यक्रीड़नयोः। ७२। किलति। चिकेल। केलिता। केलिः।

तिल स्नेहने। ७३। तिलति। तितेल। तिलः।

चिल वसने। ७४। चिलति। चिलम्। चेलम्। ब्राह्मणिचेली।

चल विलसने। ७५। चलति। चलती चलन्ती। ज्वलादिकस्य तु चल श्चाल श्चलन्तीति।

इल स्वप्नक्षेपणयो। ७६। इलति। इयेल। ईलतुः। एलिता। इला।

विल भेदने। ७७। विलति। विलम्।

णिल गहने। ७८। निलति। प्रणिलति। निनेल।

हिल हावकरणे। ७९। हिलति। हिलः।

शिल षिल उञ्छे। ८०। ८१। शिलति। शिशेल। शिलम्। सिलति। सिषेल। सिषेलयिषति।

बिल संवरणे। ८२। बिलति। बिलम्। आबिलम्।

मिल श्लेषणे। ८३। इति परस्मैपदिष्विह केचित् पठन्ति। तेषां

(11) हलन्ताच्चेति (१।२।१०) सनि हल्ग्रहणस्य जातिवाचित्वात् कित्त्वे नलोपः।

(12) मान्द्राजपुस्तके तु तीषसहलुभरुषरिष इति (७।२।४८) विशेषणार्थं इति पाठः।

(13) इच्छार्थेभ्यो विभाषा वर्त्तमान इति (३।३।१६०) वर्त्तमाने लिङ्। लट् च

कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदं फलम्। मिलति। मिमेल। मेलिता। मिलितम्। मेलः। (14)

लिख अक्षरविन्यासे। ८४। लिखति। लिलेख। लेखिता। अलेखीत्। लिखित्वा लेखित्वा। (15) उल्लेखः। लेखनं। लेखनी। प्रायेण लेखकः। लिखनं लिखिष्यति लिखितव्यमिति तु संज्ञापूर्वकविधिरनित्य इति (प, ९४)। गुणाभावं मन्यन्ते।

कुट कौटिल्ये। ८५। कुटति। चुकोट। कुटिता। अकुटीत्। चुकुटिषति। कोट्यम्। कुटित्वा।

पुट संश्लेषणे। ८६। पुटति। पुपोट। पुटिता। पुटित्वा। पुटम्।

कुच सङ्कोचे। ८७। कुचति। कुचिता। संकोचः।

गुज शब्दे। ८८। गुजति। गुजिता। अगुजीत्। गोजयति। गुजः। गोजः।

गुड़ रक्षायाम्। ८९। गुड़ति। गुड़िता। गुड़ः। गुड़ितः।

डिप क्षेपे। ९०। डिपति। डिपिता। डेप्यम्। डिप्यतीति दिवादिपाठात्।

छुर च्छेदने। ९१। छुरति। छुर्य्यात्। छुरणम्। छुरितम्। छुरिका।

स्फुट विकसने। ९२। स्फुटति। पुस्फोट। स्फुटिता। अस्फुटीत्। भ्वादिषु पाठात् स्फोटति। अस्फुटत् अस्फोटीत्। स्फोटत इति।

---

(14) कथं "न हृष्टेः शैथिल्यं मिलन मिति चेतो दहति मे" इत्यमरुशतके तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितमिति रत्नावल्यां व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरमिति गीतगोविन्दे? नहि तत्पुरुषाश्रयेण मिल श्लेषणे लिख अक्षरविन्यास इति कुटादौ। अपाच्चतुष्पाच्छकुनिष्वालेखन इति (६।१।१४२) निर्देशात्। अन्ये तु मिलनशब्दस्थाने भावे क्तान्तं मिलितशब्दं पठन्ति यथा केचिद् विश्रामशब्दस्थाने विश्रान्तिशब्दं पठन्ति।

(15) अत्रेदं केषाञ्चित् समाधानम्। गाङ् कुटादिभ्य इत्यत्र (१।२।१) कुटस्यादिः कुट आदिर्येषामित्येकशेषवृत्त्या बहुव्रीहितत्पुरुषयोर्द्वयोरप्याश्रयणात् "लिखितु' विश्वसृजोऽपि शक्तिहानि' रिति "स्वयमेव लिखिष्यत" इति सिद्धं भवतीति। अन्येतु लेखित्वा लिखित्वा लिलेखिषति विलेखितुमित्यादि वृत्तिकार (१।२।२६।३।४।१३) प्रयोगदर्शनादालेखन इति (६।१।१४२) निर्देशाच्च तत्पुरुषाश्रयणपक्ष दुष्ट एवेति मन्यमानाः संज्ञापूर्वको विधिरनित्य इति (प, ९४) परिभाषया केवलं लिखितुं लिखिष्यत इत्यभियुक्तप्रयोगद्वयं कथञ्चित् समर्थयन्ते। मिलिलिखयोस्तु कुटादिषु नान्तर्भाव एवेति व्यवस्थापयन्ति च।

मुट आक्षेपप्रमर्द्दनयोः । ९३ । मुटति । मुटिता । मोटकः । गणान्तरे मोटति । मोटयति ।

त्रुट च्छेदने । ९४ । त्रुटति त्रुट्यति । तुत्रोट । त्रुटिता ।

तुट कलहकर्मणि । ९५ । तुटति । तुटिता । तुटः ।

चुट छुट च्छेदने । ९६।९७ । चुटति । चुटिता । छुटति । छुटिता ।

जुड़ बन्धने । ९८ । जुड़ति । जुड़िता । जोड़ितेति गत्यर्थस्य ।

कड़ मदे । ९९ । कड़ति । कड़ङ्गरः (16) । काड़ः । कड़ेः कुटादिकार्य्याभावादन्यत्रापि पाठे न दोषः । एवं कुटादिपाठबलादकड़ीदित्यत्रापि अतो हलादेर्लघोरि (७।२।७) त्यनिग्लक्षणाया वृद्धेरप्यभाव इति केचित् । अपरे तु टवर्गान्तानुरोधेनेह निर्द्दिश्यत इति ब्रुवते । भ्वादिष्वस्य पाठस्तु स्वरभेदार्थः (17) ।

लुठ संश्लेषणे । १०० । लुठति । लुठिता । अलुठीत् ।

लुड़ इत्येके । १०१ । लुड़ति । लुड़िता ।

हुड सहने । १०२ । हुड़ति । हुड़िता (18) ।

कुड वाल्ये । १०३ । कुडति । कुडिता । कोड्यम् । कोडः ।

पुड़ उत्सर्गे । १०४ । पुड़ति । पुड़िता ।

घुट प्रतिघाते । १०५ । घुटति । घुटिता । घोटकः ।

तुड़ तोड़ने । १०६ । तुड़ति । तुड़िता ।

थुड़ स्थुड़ संवरणे । १०७।१०८ । थुड़ति । थुड़िता । स्थुड़ति । स्थुड़िता ।

खुड़ छुड़ इत्येके । १०९।११० । खुड़ति । खुड़िता । "खोड़ः खञ्जे त्रिषु स्मृतः ।" छुड़ति । छुड़िता ।

हुड़ संघाते । १११ । हुड़ति । हुड़िता ।

---

(16) मतान्तरे कड़ङ्गरशब्दोऽयम् । तथाच हरदत्तः—"कड़ मदे । कड़तीति कड़ः । कड़ं करोतीत्यत एव निपातनात् खच् । कड़ङ्गरो माषमुद्गादि काष्ठमुच्यत" इति । कड़ङ्गरो वुसं क्लीव इत्यमरः । कड़ङ्गरदक्षिणाच्छ चेति (५।१।६९) छप्रत्यये कड़ङ्गरमर्हति कड़ङ्गरीयो वृषः । नीवारपाकादिकड़ङ्गरीयैरिति रघुकाव्ये ।

(17) उञ्छतिवत् । उछि उञ्छे इत्यत्र टीका द्रष्टव्या ।

(18) माधवभट्टोजिभ्यामयं न दत्तः ।

व्रुड़ भ्रुड़ इत्येके। ११२।११३। व्रुड़ति। व्रुड़िता। भ्रुड़ति। भ्रुड़िता।

स्फुर स्फुरणे सञ्चलने दीप्तौ च। ११४। स्फुरति। स्फुरिता। निष्फुरति निस्फुरति। स्फोरयति स्फारयति। अपुस्फुरत् अपुस्फरत्। पुस्फोरयिषति। पुस्फारयिषति।

स्फर इत्येके। ११५। अदुपधः। स्फरति। पस्फार।

स्फुड़ वुड़ संवरणे। ११६।११७। स्फुड़ति। स्फुड़िता। वुड़ति। (19)।

क्रुड़ निमज्जने। ११८। क्रुड़ति। क्रोड़ः। क्रोड़ा।

भृड़ इत्यप्येके। ११९। भृड़ति। बभर्ड। भृड़िता।

भ्रुड़ इत्यपरे। १२०। भ्रुड़ति।

स्फुल सञ्चलने। १२१। स्फुलति। पुस्फोल। स्फुलिता। निष्ष्फुलति निःस्फुलति। इति परस्मैभाषा उदात्ताः।

गुरी उद्यमे। १२२। गुरते। जुगुरे। गुरिता। उद्गूर्णः। उद्गूर्णवान्। इति आत्मनेभाषः। अयमनुदात्तेत्।

णू स्तवने। १२३। नुवति। प्रणुविता। न्यनुवीत्। नूत्वा। नूतः।

धू विधूनने। १२४। धुवति। धुविता। धुवित्रम्। केचिदत्र गुणमिच्छन्ति। धवित्रम्। धूतम्।

गु पुरीषोत्सर्गे। १२५। गुवति। जुगाव। जगुवतुः। गुता। गुष्यति। अगुषीत्। अगुताम्। अगुतम्। गूनः। गूणवान्।

ध्रु गतिस्थैर्ययोः। १२६। ध्रुवति। ध्रुविता। अध्रुवीत्। ध्रुवः। इति कुटादिष्वजन्ता एते परस्मैपदिनः।

कुङ् शब्दे। १२७। कुवते। कुता। अकुत। चोकूयते। कूङिति दीर्घान्तोऽयमित्येके इच्छन्ति। कुवते। कुविता। आकूतम्। विकूतमिति।

वृदिति। कुटादि परिसमाप्तिः।

पृङ् व्यायामे। १२८। व्याप्रियते। व्यापप्रे। व्यापर्त्ता। व्यापरिष्यते। व्यापुपूर्षते। व्यापारयति। व्यापीपरत्। व्यापृत्य। व्यापृतः। व्यापारः। संपारः।

---

(19) "मैत्रेयेणैते न पठ्यन्ते।" इति माधवः। अस्मत्संगृहीतगघङपुस्तकेषु तु ते सन्ति।

मृङ् प्राणत्यागे । १२९ । म्रियते । ममार । मर्त्ता । मरिष्यति । अम्रियत । मृषीष्ट । अमृत । मुमूर्षति । मरीम्रीयते । मारयति । अमीमरत् । मृत्वा । मृतः । मृत्युः । मरः । अमरः । इति आत्मनेभाषौ । अजन्ताविमावात्मनेपदिनौ ।

रि पि गतौ । १३० । १३१ । रियति । रिराय । रिय्यतुः । रेता । रीयात् । अरैषीत् । रिरीषति । रेरीयते । पियति । पिपाय । पेता ।

धि विधारणे । १३२ । धियति । दिधाय । दिध्यतुः । धेता ।

क्षि निवासगत्योः । १३३ । क्षियति । चिक्षाय । क्षयः । प्रक्षीय । क्षीणं क्षितम् । क्षयी ।

षू प्रेरणे । १३४ । सुवति । अभिषुवति । सविता । सूर्य्यः । सूतः ।

कॄ विक्षेपे । १३५ । किरति । अवकिरते हस्ती स्वयमेव (20) । अपस्किरते वृषभः । चकार । चकरतुः । चकरुः । करिता करीता । अकारीत् । चिकरिषति (21) । चेकीर्य्यते । विकिरः विष्किरः । उत्कारो धान्यानाम् । उत्करो रजसाम् । कीर्णः । कीर्णिः ।

गॄ निगरणे । १३६ । गिरति गिलति । अवगिरते । संगिरते । विजिगरिषति । निजेगिल्यते । उद्गीर्णम् । उद्गारः । तिमिङ्गिलः । गरः । गलः । इति परस्मैभाषाः । परस्मैपदिन इत्यर्थः । षूप्रभृतय उदात्ताः ।

दृङ् आदरे । १३७ । आद्रियते । आदर्त्ता । आदिदरिषते । देद्रीयते । आदृत्यः । आदरी । आदृतः ।

धृङ् अवस्थाने । १३८ । ध्रियते (22) । दध्रे । धर्त्ता । दिधरिषते । धर्मः । आधारः । इति आत्मनेभाषौ । किरादिकार्य्यानुरोधेन धृङ्मृङोरनन्तरं नोपदिष्टौ एतौ ।

---

(20) भूषाकर्मकिरादिसनाञ्चान्यत्रात्मनेपदादिति (३।१।८७, वा) कर्मकर्त्तरि यक्चिणोर्निषेधः । अवाकीर्ष्ट अवाकरिष्ट अवाकरीष्ट वा हस्ती स्वयमेव । स्वदेहं पांश्वादिनावकिरति स्म आवृणोतिस्मेत्यर्थः ।

(21) किरश्च पञ्चभ्य इति (७।२।७५) सनि नित्यमिट् । नात्र वॄतो वेति (७।२।३८) प्रवर्त्तते वामनहरदत्तमते । भागवृत्तिकारस्त्वत्रापि दीर्घविकल्पमाह । मान्द्राजपुस्तके चिकरीषतीति दीर्घोदाहरणमपि दत्तम् । ङपुस्तके तु केवलह्रस्वोदाहरणमेव ।

(22) "ध्रियते स्वेदलवोद्गमोऽपि ते" इति रघुकाव्ये । "ध्रियते कुसुमप्रसाधनम्" इति कुमारे ।

प्रच्छ ज्ञीप्सायाम्। १३९। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छुः। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। अप्राष्टाम्। पिपृच्छिषति। परीपृच्छ्यते। पृष्ट्वा। पृष्टः। प्रश्नः। पृच्छा। शब्दप्राट्। शब्दप्राशौ। शब्दप्राशः। इति पञ्च चेते किरादयः। हदिति किरादिपरिसमाप्तेः। (23)

सृज विसर्गे। १४०। सृजति। ससर्ज्ज। ससृजतुः। स्रष्टा। स्रक्ष्यति। अस्राक्षीत्। सिसृक्षति। सरीसृज्यते। सृज्यते श्रद्धया मालां धार्मिकः (24)। असर्जि मालां श्रद्धया धार्मिकः। सर्गः। सृष्टिः। स्रक्। स्रजौ। स्रग्वी।

टुमस्जो शुद्धौ। १४१। मज्जति। ममज्ज। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। मिमङ्क्षति। मामज्ज्यते। मग्नः। मज्जनम्। साधुमक्। मज्जथुः। मङ्क्त्वा मक्त्वा। मद्गुः। मङ्गुरः।

रुजो भङ्गे। १४२। रुजति। रोक्ता। रुग्णः। रुक्। रुजा। रोगः। रुक्त्वा। कूलमुद्रुजः।

भुजो कौटिल्ये। १४३। भुजति। भोक्ता। बुभुक्षति। बोभुज्यते। भुक्त्वा। भुग्नः।

छुप स्पर्शे। १४४। छुपति। चुच्छोप। छोप्ता। छोप्स्यति। अच्छौप्सीत्। चुच्छुप्सति। चोच्छुप्यते। छुप्त्वा। छुप्तः।

रुश रिश हिंसायाम्। १४५। १४६। रुशति। रोष्टा। रिशति। रेष्टा।

लिश गतौ। १४७। लिशति। लिलेश। प्रलेष्टा। अलिक्षत्। लेशः।

स्पृश संस्पर्शे। १४८। स्पृशति। पस्पर्श। स्प्रष्टा स्पर्ष्टा। स्प्रक्ष्यति स्पर्क्ष्यति। अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। अस्प्राष्टाम् अस्पार्ष्टाम् अस्पृक्षताम्। पिस्पृक्षति। परीस्पृश्यते। स्पृष्ट्वा। स्पृष्टः। स्पर्शः। मन्त्रस्पृक्। उदकस्पर्शः। इति परस्मैभाषा अनुदात्ताः। एते प्रच्छप्रभृतयः।

---

(23) एवं चिकरिषतीति। जिगरिषति जिगलिषति। दिदरिषते दिधरिषते पिपृच्छिषतीत्युदाहरणानि। उदर्दिधीर्षुरिति तु औणादिकयोर्धृङ्धृञो रूपम्। किरश्च पञ्चभ्य इति (७।२।७५) किरादिफलं सनि नित्यमिट्।

(24) अत सृजेः श्रद्धोपपन्ने कर्त्तर्य्येवेति भाष्यात् कर्मकर्त्तरि तङ्। "सृजियुज्योः श्यंस्तु" (३।१।८७, वा) इति श्यन्। नतु यक्। श्रद्धया निष्पादयतीत्यर्थः।

विछ गतौ । १४९ । विच्छायति । विच्छेस्तुदादिपाठसामर्थ्यादाय-प्रत्ययान्तादपि शो (25) भवति यथा जुगुप्सत इत्यत्रात्मनेपदम् । एकदेश-पाठात् । अन्ये तु अत्र पाठसामर्थ्येन सार्वधातुकेऽप्यायप्रत्ययस्य विकल्प-विधानमाचक्षते । तथाच च्छोः शूडनुनासिके चेत्यत्र (६।४।१९) गां विच्छतीति गोविड़िति न्यासे दृश्यते । एवञ्च विच्छति विच्छायति । विविच्छ विच्छायाञ्चकार । विच्छिता विच्छायिता । विच्छायन्ती विच्छायती । विच्छयति । विच्छाययति । अविविच्छत् अविविच्छायत् । विच्छित्वा विच्छायित्वा । विच्छितः विच्छायितः । विश्नः । इति परस्मैभाष उदात्तः ।

विश प्रवेशने । १५० । विशति । निविशते । वेष्टा । अविक्षत् । विष्टम् । वेशः । वेशनम् ।

मृश आमर्शने । १५१ । मृशति । म्रष्टा मर्ष्टा । म्रक्ष्यति मर्क्ष्यति । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । अम्राष्टाम् अमार्ष्टाम् अमृक्षताम् ।

णुद प्रेरणे । १५२ । नुदति । नुनोद । नोत्ता ।

षद्लृ विशरणे । १५३ । सीदति । ससाद । सत्ता । असदत् । सिषत्सति । सीदती सीदन्ती । सादः सद इति ज्वलादिपाठात् । (26)

शद्लृ शातने । १५४ । शीयते । शशाद । शत्ता । शत्स्यति । शिशत्सति । भ्वादिष्वयं पठितः । स्वरार्थं पुनरत्र पठ्यते (27) । इति परस्मैभाषा अनुदात्ताः । एते विशिप्रभृतयः । हलन्ता अप्येतेऽनिट्प्रकरणे पुनः परस्मैपदिन उक्ताः ।

मिल सङ्गमे । १५५ । मिलति मिलते । न्यमेलीत् न्यमेलिष्ट (28) । अयमुदात्तः ।

---

(25) तुदादिभ्यः श इत्यनेन (३।१।७७) शप्रत्यय इत्यर्थः ।

(26) अत्र पाठे प्रयोजनं सीदती सीदन्तीति नुम्विकल्पः । भ्वादौ पाठः ज्वलादित्वात् सादः सद इति वा णप्रत्ययार्थः । स्वरभेदार्थश्च । भ्वादौ सीदतीत्यस्य शप्तिपोरनुदात्तत्वाद् धातो (६।१।१६२) रित्याद्युदात्तत्वम् । तुदादौ तु प्रत्ययस्वरेण मध्योदात्तत्वम् ।

(27) शदेः शित इति (१।३।६०) तङ्विधानादत्र नुम्विकल्पप्रयोजनं नास्ति । स्वरभेदस्तु प्रयोजनम् । तत्रपूर्ववत् तुदादौ अस्य मध्योदात्तत्वम् ।

(28) पुनः पाठः कर्त्रभिप्राये तङर्थः ।

मुच्लृ मोचणे । १५६ । मुञ्चति मुञ्चते । मुमोच मुमुचे । मुमुचतुः मुमुचाते । मोक्ता । मोक्ष्यति मोक्ष्यते । अमुचत् अमुक्त । मुमुक्षते मुमुक्षति । मोचते वत्सः स्वयमेव । मुक्तम् । मुक्तिः । निर्मोकः । नखमुचं धनुः । मुक् । मुक्ता । मौक्तिकम् । मोक्षः ।

लुप्लृ च्छेदने । १५७ । लुम्पति लुम्पते । लुलोप लुलुपे । लोप्ता । लोप्स्यति लोप्स्यते । अलुपत् अलुप्त । लोलुप्यते । लोपः ।

विद्लृ लाभे । १५८ । विन्दति विन्दते । वेत्ता । वेत्स्यति । मतान्तरे वेदिता । वेदिष्यति । अविदत् अवित्त । विन्नम् । कलापतन्त्रेऽप्यस्यानिट्-त्वमिष्यते । वेत्ता । विन्नः । वित्तम् (29) ।

लिप उपदाहे । १५९ । लिम्पति लिम्पते । लिलेप लिलिपे । लेप्ता । अलिपत् अलिपत अलिप्त । लेप्यम् । लिम्पः । विलेपिका ।

षिच क्षरणे । १६० । सिञ्चति सिञ्चते । निषिञ्चति । सिषेच सिषिचे । सेक्ता । सेक्ष्यति सेक्ष्यते । न्यषिञ्चत् । असिचत् असिचत असिक्त । सिसिक्षति सिसिक्षते । निषिषिक्षति । सेसिच्यते । निसेसिच्यते । अभिषेकः । इति उभयतोभाषाः । स्वरितेतः मिलप्रभृतयः । अनुदात्ताः मुच्लृप्रभृतयः ।

कृती छेदने । १६१ । कृन्तति । चकर्त्त । कर्त्तिता । कर्त्स्यति कर्त्तिष्यति कृत्सीष्ट कर्त्तिषीष्ट (30) । अकर्त्तीत् । चरीकृत्यते । कर्त्तयति । अचीकृतत् अचकर्त्तत् । कृत्तिः । कृत्तम् । कृत्तवान् । विकर्त्तनः (31) ।

खिद परीघाते । १६२ । खिन्दति । चिखेद । खेत्ता । खेत्स्यति । अखैत्सीत् । अखित्ताम् । चिखित्सति । चेखिद्यते । खित्त्वा । खिन्नः । खिद्यते खिन्ते इति गणान्तरपाठात् ।

---

(29) व्याघ्रभूतिमतेऽयं सेट् । भाष्यमते त्वनिट् ।

(30) कर्म्मण्ययं प्रयोगः । तत्र सेऽसिचि कृतचृतच्छृदतृदनृत इति (७.२।५७) वेट्त्वम् । लिङ्सिचा-वात्मनेपदेष्विति (१।२।११) झलादिलिङः कित्त्वम् । तेन कृत्सीष्ट । पक्षे कर्त्तिषीष्टेति ।

(31) कथं "विरहिनिकृन्तनकुन्तमुखाकृतिकेतकीदन्तुरिताशे" इति जयदेवः ? उणादिषु द्रष्टव्यः । त्रुटि तु निकर्त्तन एव ।

पिश अवयवे । १६३ । पिंशति । पिपेश । पेशिता । पिशितम् । पेशी । इति परस्मैभाषाः । एते कृतिप्रभृतयः परस्मैपदिनः । उदात्ताश्च खिदिवर्जम् ।

वृदिति । मुचादेस्तुदादेश्च परिसमाप्तेः । मुचादयस्तुदादयश्च वृत्ताः समाप्ता इत्यर्थः ।

इति महामहोपाध्याय (32) श्रीमैत्रेयरक्षितकृतौ
धातुप्रदीपे तुदादीनां वृत्तिः ॥ ६ ॥

---

## अथ रुधादय उच्यन्ते ।

रुधिर् आवरणे । १ । रुणद्धि । नित्यत्वाद् विकरणेन गुणो बाध्यते । रुन्धे । रुरोध रुरुधे । रोद्धा । रोत्स्यति रोत्स्यते । अरुधत् अरौत्सीत् अरुद्ध । समरुद्ध विक्रमः स्वयमेव ।

भिदिर् विदारणे । २ । भिनत्ति भिन्ते । अभिदत् अभैत्सीत् अभित्त । भिदा । भेदः । भित्तिः ।

छिदिर् द्वैधीकरणे । ३ । छिनत्ति छिन्ते । चिच्छेद चिच्छिदे । अच्छिदत् अच्छैत्सीत् अच्छित्त । दधि चिच्छित्सति । रज्जुच्छित् ।

रिचिर विरेचने । ४ । रिणक्ति रिङ्क्ते । अरिचत् अरैक्षीत् अरिक्त । रिरिक्षति रिरिक्षते । रेरिच्यते । विरेकः । रिक्थं द्रव्यम् ।

विचिर् पृथग्भावे । ५ । विनक्ति विङ्क्ते । अविचत् अवैक्षीत् अविक्त । विविक्तः । विवेकः पृथगात्मता । विवेकी ।

क्षुदिर् सम्पेषणे । ६ । क्षुणत्ति क्षुन्ते । अक्षुदत् अक्षौत्सीत् अक्षुत्त । क्षुण्णम् । क्षुद्रः ।

युजिर् योगे । ७ । युनक्ति युङ्क्ते । प्रयुङ्क्ते । नियुङ्क्ते । संयुनक्ति । अयुजत् अयौक्षीत् अयुक्त । युङ् । युञ्जौ । योगः । अश्वयुक् । युग्यम् । युगम् । युज्यत इति युज समाधाविति दैवादिकस्य । (1)

---

(32) चपुस्तके वैयाकरणगजपञ्चानन इत्यवाधिकः पाठः ।

(1) प्रनास्तु वृत्तिं यमयुङ्क्त वेदितुमिति स्वरितेत्त्वात् तङ् ।

उछृदिर् दीप्तिदेवनयोः। ८। छृणत्ति छृन्ते। चच्छर्द चच्छृदे। छर्दिता। छर्दिष्यति छर्त्स्यति छर्दिष्यते छर्त्स्यते। छृद्यात् छर्दिषीष्ट छृत्सीष्ट। अच्छृदत् अच्छर्दीत् अच्छर्दिष्ट। चिच्छर्दिषति चिच्छृत्सति। चरीच्छृद्यते। छर्दित्वा छृत्त्वा। छृण्णम्। छर्दिः।

उतृदिर् हिंसानादरयोः। ९। तृणत्ति तृन्ते। ततर्द ततृदे। तर्दिता। तर्दिष्यति तर्त्स्यति तर्दिष्यते तर्त्स्यते। तृद्यात् तर्दिषीष्ट तृत्सीष्ट। अतृदत् अतर्दीत् अतर्दिष्ट। तितर्दिषति तितृत्सति। तरीतृद्यते। तर्दित्वा तृत्त्वा। तृण्णम्। तृण्णवान्।

इति उभयतो भाषाः स्वरितेतः। छर्दितर्दिवर्जमनुदात्ताः।

कृती वेष्टने। १०। कृणत्ति। कर्त्तिता। कर्त्तिष्यति कर्त्स्यति। अकर्त्तीत्। चिकर्त्तिषति चिकृत्सति। चरीकृत्यते। कृत्तम्। इति परस्मैभाष उदात्तः। ऋदुपधतकारान्तानुरोधेन पृथगयं परस्मैपदी निर्दिश्यते।

ञिइन्धि दीप्तौ। ११। इन्धे। इन्धाते। इन्धते। इन्धाञ्चक्रे। इन्धिता। इन्दिधिषते। इद्धमस्य। इन्धित्वा। समित्। इन्धानः।

खिद दैन्ये। १२। खिन्ते। खिन्दाते। खेत्ता। अखित्त। खिन्दानः। खिद्यत इति दैवादिकस्य। खिन्दतीति खिद परिघात इत्यस्य।

विद विचारणे। १३। विन्ते। विन्दाते। वेत्ता। विन्नम्। वित्तम्।

इति आत्मनेभाषा अनुदात्तेतः। इन्धिवर्जमनुदात्तौ।

शिष्लृ विशरणे। १४। विशिनष्टि। शेष्टा। शेक्ष्यति। शिनष्टु। शिण्ढि। शिनषाणि। अशिनट्। अशिषत्। तङि व्यत्यशिक्षत। शिशिक्षति। शिष्टः। विशेषः। विशिष्यते। चौरादिकस्य तु विशेष्यत इति।

पिष्लृ सञ्चूर्णने। १५। पिनष्टि। चौरस्य पिनष्टि। धानाः पिनष्टि। पिंष्टः। पेष्टा। पिनष्टु। पिण्ढि। अपिनट्। अपिषत्। व्यत्यपिक्षत। पिपिक्षति। चूर्णपेषं पिनष्टि। उदपेषं पिष्टम्।

भञ्जो आमर्दने। १६। भनक्ति। बभञ्ज। भङ्क्ता। भङ्क्ष्यति। अभनक्। अभाङ्क्षीत्। अभाजि अभञ्जि। बिभङ्क्षति। बम्भज्यते। भक्त्वा भङ्क्त्वा। भङ्गुरम्। भग्नः। भङ्गः। भङ्ग्यम्। भङ्गा कुसुम्भम्। भाङ्गीनम्। भङ्गाकटम्।

भुज पालनाभ्यवहारयोः। १७। भुनक्ति पृथिवीम्। अन्नं भुङ्क्ते। सुखमनुभुङ्क्ते। भोक्ता। भोक्ष्यति भोक्ष्यते। भुनजानि भुनजै। भुनजाव भुनजावहै। भुनजाम भुनजामहै। अभुनक् अभुङ्क्त। अभौक्षीत् अभुक्त। बुभुक्षति बुभुक्षते। बोभुज्यते। भोज्यम्। भोग्या लक्ष्मीः। भुक्त्वा। भुक्तम्। भोगः। इति अनुदात्ताः। एते शिषिप्रभृतयः।

तृह हिसि हिंसायाम्। १८। १९। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। तृणेढु। तृण्ढि। तृणहानि। अतृणेट्। अतर्हीत्। हिनस्ति। जिहिंस। हिंसिता। हिनस्तु। हिन्धि। हिनसानि। अहिनत्। अहिनस्त्वम् अहिनत् त्वम्। अहिनसम्। अहिंसीत्। जिहिंसिषति। जेहिंस्यते। हिंसकः। हिंस्रः। हिंसा।

उन्दी क्लेदने। २०। उनत्ति। उन्दाञ्चकार। औन्दीत्। उन्दिदिषति। समुन्नं समुत्तम्। समुद्रः। इति उदात्ताः। तृहिप्रभृतयः।

अन्जू व्यक्तिम्रक्षणकान्तिगतिषु। २१। अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। अङ्क्ता अञ्जिता। अञ्जिष्यति अङ्क्ष्यति। आनक्। आञ्जीत्। अञ्जिजिषति। अञ्जयति। आञ्जिजत्। अञ्जित्वा अङ्क्त्वा अक्त्वा। अक्तः। अक्तवान्। आज्यम्। व्यञ्जनम्। व्यक्तिः। व्यङ्ग्यम्। अङ्गम्। अञ्जिका।

तन्चू संकोचने। २२। तनक्ति। ततञ्च। तञ्चिता तङ्क्ता। तञ्चिष्यति तङ्क्ष्यति। अतनक् अतङ्क्त। अताङ्क्षीत् अतञ्चीत्। तितञ्चिषति। तितङ्क्षति। तातच्यते। तञ्चित्वा तक्त्वा। तक्तः। तक्तवान्। आतङ्कः। तक्रम्।

ओविजी भयचलनयोः। २३। विनक्ति। विङ्क्तः। विञ्जन्ति। विवेज। विजिता। विजिष्यति। अविजीत्। विविजिषति। विजित्वा। उद्विग्नम्। उद्विजितमिति पूर्वकस्य रूपम्। (2)

---

(2) वस्तुतस्तु उद्विजितमिति उद्विपूर्वाञ्जयतेः क्तः। जौहोत्यादिकस्य विजिर् पृथग्भावे इत्यस्यानिट्त्वात्। ओविजी भयचलनयोरिति तौदादिकस्य रौधादिकस्य च ओदितो निष्ठायामित्यनेन (७।२।१४) निष्ठायामनिट्त्वात्।

वृजी वर्जने । २४ । वृणक्ति । ववर्ज ववृजतुः । वर्जिता । वर्जिष्यति । अवृणक् । वर्जित्वा । वृक्तम् ।

पृची सम्पर्के । २५ । पृणक्ति । पपर्च । पर्चिता । अपृणक् । सम्पृक्तम् । मधुपर्कः । मधुपर्कमर्हति मधुपर्क्यः । पृक्त इत्यदादिपाठात् । वृक्त इति च ।

इति परस्मैभाषा उदात्तेतः । वृजिप्रभृतय उदात्ताः ।

वृदिति रुधादिगणपरिसमाप्तेः । धातुपारायणे तु गणसमाप्तिर्नेष्यते । तेन लुनति पुनति लुनती पुनतीति सिध्यति

इति महामहोपाध्यायश्रीमैत्रेयरचितकृतौ

धातुप्रदीपे रुधादीनां वृत्तिः ॥ ७ ॥

---

## अथ तनादय उच्यन्ते ।

तनु विस्तारे । १ । तनोति तनुते । तायते तन्यते । ततान तेने । तनिता । तनोतु तनुताम् । तनु तनुष्व । तनवानि तनवै । अतानीत् अतनीत् अतनिष्ट अतत । तितनिषति तितांसति तितंसति तितनिषते तितांसते तितंसते । तंतन्यते । तन्वन् तन्वानः । तनित्वा तत्वा । ततम् । सततं सन्ततम् । सातत्यम् । वितत्य । ततिः । तन्तिः । परीतत् । वितानः । प्रतानः । तितउः ।

षणु दाने । २ । सनोति सनुते । सायते सन्यते । सनिष्यति सनिष्यते । सायात् सन्यात् । असनीत् असानीत् असनिष्ट असात । असनीः असानीः असनिष्ठाः असाथाः । सिषासति सिषासते सिसनिषते सिसनिषति । सासायते संसन्यते । सनित्वा सात्वा । सातम् । सातिः सतिः सन्तिः ।

क्षणु हिंसायाम् । ३ । क्षणोति क्षणुते । चक्षाण चक्षणे । क्षणिता । अक्षणीत् अक्षत अक्षणिष्ट । चिक्षणिषति । चङ्क्षण्यते । क्षाणयति । अचिक्षणत् । क्षत्वा क्षणित्वा । क्षतम् । क्षतिः । अस्योपदेशे दन्त्यनकार इति धातुपारायणे व्याख्यातम् । तेन यङ्लुकि चङ्क्षन्ति । चङ्क्षान्तः ।

क्षिणु च । ४ । हिंसायामित्यपीच्छते । क्षिणोति क्षिणुते । संज्ञापूर्वको विधिरनित्य इति विकरणापेक्षः लघूपधगुणो न भवति (1) । चिक्षेण चिक्षिणे । क्षेणिष्यति क्षेणिष्यते । अक्षेणीत् अक्षेणिष्ट अक्षित । चिक्षिणिषति । क्षेणयति । चेक्षिण्यते । चेक्षेन्ति (2) । क्षितः । क्षितिः । क्षिणित्वा क्षेणित्वा क्षित्वा ।

ऋणु दीप्तौ गमने च । ५ । अर्णोति अर्णुते । आनर्ण आनृणे । आनृणतुः आनृणाते । अर्णिष्यति अर्णिष्यते । अर्णोतु अर्णुताम् । अर्णुहि अर्णुष्व । आर्णीत् आर्णिष्ट आर्त्त । णत्वस्यासिद्धत्वादकृतणत्वस्य द्विर्वचनं धातुपारायणे दर्शितम् । अर्णिनिषति अर्णिनिषते । अर्णयति । आर्णिनत् । अर्णित्वा ऋत्वा । ऋतम् । ऋतवान् । स्वर्णं सुवर्णम् (3) । सर्वत्र विकरणापेक्षो गुणः । अन्ये तु संज्ञापूर्वकविधेरनित्यत्वाद् गुणाभावं मन्यमाना ऋणोति ऋणुत इत्यादि रूपमाहुः । एवं मतान्तरेणैव क्षेणोति क्षेणुत इत्यादि ।

तृणु अदने । ६ । तर्णोति तर्णुते । मतान्तरे तृणोति तृणुते । ततर्ण ततृणे । तर्णिष्यति तर्णिष्यते । तरीतृण्यते । केचिदस्योपदेशे मूर्धन्यान्तमाहुः । तन्मते तरीतृण्टि । अन्येषां तरीतृन्ति । तरीतृणोति । तर्णित्वा तृत्वा । तृतः । तृणम् । कत्तृणम् । (4)

घृणु दीप्तौ । ७ । घृणोति घृणुते घर्णोति घर्णुते । जघर्ण जघृणे । घर्णिष्यति घर्णिष्यते । घर्णोतु घृणोतु घृणुताम् घर्णुताम् । घृणु घर्णुहि घृणुष्व घर्णुष्व । जरीघृण्यते । इति विभाषिताः । एते तनादयः स्वरितेतः । उदात्ताः ।

वनु याचने । ८ । वनुते । वन्वाते । वन्वते । ववने । वनिष्यते । अव-

---

(1) मतान्तरे गुण इति परस्मिन् धातावुक्तम् ।

(2) अयमप्युपदेशे तवर्गीयान्तः । अस्य णत्वन्तु लाक्षणिकम् ।

(3) स्वर्णमिति पचाद्यच् । सुवर्णमित्यत्र माधवः—"तन्वादीनाञ्छन्दस्युपसंख्यानमिति (६।४।७७, वा) उपसर्गस्योवङ् । संज्ञाशब्दत्वाद्द भाषायामप्यस्य प्रयोगः साधुरित्यात्रेयमैत्रेयौ । शोभनो वर्णोऽस्येत्यपि शक्यते व्युत्पादयितुम् ।" इति ।

(4) तृणमिति घञर्थे कः (३।३।५८, वा) । कत्तृणं तृणजातिविशेषः । अस्त्री कुशं कुशो दर्भः पवित्रमथ कत्तृणमित्यमरः ।

निष्ट अवत । अवनिष्ठाः अवथाः । विवनिषते । वंवन्यते । वनित्वा वत्वा । वतः । वतवान् । वनोति ववान ववनतुः ववनुरिति चान्द्रा (5) उदाहरन्ति । दन्त्योष्ठ्यादिरयम् ।

मनु बोधने । ९ । मनुते । मेने । मनिष्यते । अमनिष्ट अमत । मनित्वा मत्वा । इति आत्मनेभाषावुदात्तौ ।

डुकृञ् करणे । १० । करोति कुरुते । कुर्वः कुर्वहे । कुर्मः कुर्महे । क्रियते । चकार चक्रे । कर्त्ता । करिष्यति करिष्यते । करोतु कुरुताम् । कुरु कुरुष्व । करवाणि करवै । अकरोत् अकुरुत । कुर्य्यात् कुर्वीत । क्रियात् कृषीष्ट । अकार्षीत् अकृत । अकार्ष्टाम् अकृषाताम् । अकारि । अकारिषाताम् अकृषाताम् । चिकीर्षति चिकीर्षते । चेक्रीयते । कृत्रिमम् । कारः । चक्रम् (6) । चक्रिः (7) । कारिमम् (8) । शुचः करः शूकरः । पृषोदरादिपाठात् (६।३।१०९) चकारलोपः । अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घश्चेति । उच्चारविट् शूकरः । इति विभाषितः । उभयपद्ययम् । अनुदात्तः । नकारान्तेभ्यो भिन्नं रूपमस्यानिट्त्वमकारस्योत्त्वञ्चेति पृथग्निर्द्देशः (9) ।

हृदिति ।। तनादिगणपरिसमाप्तः ।

इति महामहोपाध्यायश्रीमैत्रेयरचितकृतौ
धातुप्रदीपे तनादीनां वृत्तिः ॥४॥

---

## अथ क्र्यादय उच्यन्ते ।

डुक्रीञ् द्रव्यविनिमये । १ । क्रीणाति क्रीणीते । परिक्रीणीते । विक्रीणीते । चिक्राय चिक्रिये । क्रेता । क्रेष्यति क्रेष्यते । अक्रीणात् अक्रीणीत । अक्रीणीताम् अक्रीणाताम् । अक्रीणाम् अक्रीणि । अक्रैषीत् अक्रेष्ट । चिक्रीषति चिक्रीषते । चेक्रीयते । क्रापयति । अचिक्रपत् । क्रयः । क्रय्यम् क्रेयम् । क्रेता । क्रायकः । क्रीणन् क्रीणानः । क्रीत्वा । क्रीतः । क्रीत्रिमम् ।

प्रीञ् तर्पणे । २ । प्रीणाति प्रीणीते । पिप्राय पिप्रिये । प्रीणयति । अपिप्रीणत् । प्रियः । छात्रप्रियोऽध्यायः ।

श्रीञ् पाके । ३ । श्रीणाति श्रीणीते । श्रेता । अश्रैषीत् अश्रेष्ट । श्राययति । अशिश्रयत् ।

मीञ् हिंसायाम् । ४ । मीनाति मीनीते । प्रमीणाति । प्रमीणीतः । ममौ मिम्ये । मिम्यतुः मिम्याते । माता । मास्यति मास्यते । मीयात् मासीष्ट । अमासीत् अमास्त । मित्सति मित्सते । मेमीयते । मापयति । अमीमपत् । मीत्वा । मीतः । प्रमाय । सुमयः । मयः ।

षिञ् बन्धने । ५ । सिनाति सिनीते । सिषाय सिष्ये । सेष्यति सेष्यते । सिसीषति सिसीषते । सितः । सिनोतीति सौवादिकस्य ।

स्कुञ् आप्लवने । ६ । स्कुनाति स्कुनीते स्कुनोति स्कुनुते । चुस्काव चुस्कुवे । स्कोता । स्कूयात् स्कोषीष्ट । अस्कौषीत् अस्कोष्ट । चुस्कूषति चुस्कूषते । चोस्कूयते । स्कावयति । स्कुत्वा । स्कुतः ।

युञ् बन्धने । ७ । युनाति युनीते । युयाव युयुवे । योता । युयूषति युयूषते । निरनुबन्धकस्य यौते "रथो युनुच्णव" इति (1) सेट एव सनीवन्तर्द्धेत्यत्र (७।२।४९) ग्रहणम् । इति उभयतोभाषा अनुदात्ताः ।

क्नूञ् शब्दे । ८ । क्नूनाति क्नूनीते । चुक्नाव चुक्नुवे । क्नविता । अक्नावीत् । क्नूतः । सर्वस्वे तु क्नुञ् शब्द इति (2) ।

---

(5) चान्द्रास्त्विमं परस्मैपदिनमाहुः ।

(6) चक्रमिति घञर्थे के (३।३।५८, वा) क्रञादीनां के (६।१।१२, वा) इति द्विर्वचनम् ।

(7) भाषायां धाञ्कृसृगमिजनिनमिभ्य इति (३।२।१७१, वा) किकिनौ ।

(8) भावप्रत्ययान्तादिमब् वक्तव्य इति (४।४।२०, वा) कारशब्दादिमप् ।

(9) ससुट्कस्य तु कृञो लिटि कृञोऽसुट इति (७।२।१०, वा) वक्तव्यादिट् । सञ्चस्कार सञ्चस्करतुः सञ्चस्करिथ सञ्चस्करिवेति । ऋतश्च संयोगादेरिति (७।४।१9) गुणः ।

(1) गणस्थमूदन्तमुताश्चरुस्नुवौ चुवं तथोर्णोति मयो युनुच्णव इति व्याघ्रभूतिकारिकांशोऽयम् ।

(2) उपुस्तके च क्नुञ् शब्द इति ह्रस्वपाठः । तेनायमनिट् । अक्नौषीदिति च तत्र लुङि उदाहरणं दत्तम् । क्नोता । क्नोष्यति इत्यादि ।

दूञ् हिंसायाम् । ९ । दूणाति दूणीते । द्रविता । अद्रावीत् अद्रविष्ट । दूतः । दूत्वा । दुदूषति दुदूषते । द्रवितुम् ।

पूञ् पवने । १० । पुनाति पुनीते । पुपाव पुपुवे । पविता । पविष्यति पविष्यते । अपावीत् अपविष्ट । पुपूषति पुपूषते । पोपूयते । पूत्वा । पूताः । विनाशे पूना यवाः ।

लूञ् छेदने । ११ । लुनाति लुनीते । लविता । अलावीत् अलविष्ट । अलाविष्ट अलविध्वम् अलविढ्वम् । लूत्वा । लूनः । लूनिः । लवित्रम् ।

स्तॄञ् आच्छादने । १२ । स्तृणाति स्तृणीते । तस्तार तस्तरे । स्तरिता स्तरीता । स्तीर्य्यात् स्तीर्षीष्ट स्तरिषीष्ट । अस्तारीत् अस्तीर्ष्ट अस्तरिष्ट अस्तरीष्ट । तिस्तीर्षति तिस्तरिषति तिस्तरीषति । स्तारयति । अतस्तरत् । ण्यन्ताल्लुङ् । स्तीर्त्वा । विस्तीर्णम् । पुष्पप्रस्तारः । कीर्त्तिविस्तारः । वाग्विस्तरः । विष्टरः । विष्टारपङ्क्तिश्छन्दः । विस्तृणोति विस्तृतमिति स्तृञः सौवादिकस्य रूपम् ।

कॄञ् हिंसायाम् । १३ । कृणाति कृणीते । कीर्णः । कीर्णिः ।

वॄञ् वरणे । १४ । वृणाति वृणीते । ववार ववरे । वरिता वरीता । वूर्य्यात् वूर्षीष्ट वरिषीष्ट । अवारीत् अवरिष्ट अवरीष्ट अवूर्ष्ट । विवरिषति विवरीषति वुवूर्षति । वोवूर्य्यते । वूर्णः । वूर्णिः ।

धूञ् कम्पने । १५ । धुनाति धुनीते । धोता धविता । दुधाव दुधुवे । अधावीत् अधोष्ट अधविष्ट । दुधूषति दुधूषते । दोधूयते । धूनयति । अदूधुनत् । धूत्वा । धूनम् । धूनिः । धोतुं धवितुम् । धृतमिति धात्वन्तरस्य रूपम् । इति उदात्ता विभाषिताः । एते कॄञ्प्रभृतयः ।

शॄ हिंसायाम् । १६ । शृणाति । शीर्य्यते । शशार । शशरतुः शश्रतुः । शरिष्यति शरीष्यति । शीर्य्यात् । अशारीत् । शिशरिषति शिशरीषति शिशीर्षति । शेशीर्य्यते । शीर्णम् । शीर्णिः ।

पॄ पालनपूरणयोः । १७ । पृणाति । पपार । पपरतुः पप्रतुः । पूर्य्यात् । अपारीत् । पिपरिषति पिपरीषति पुपूर्षति । पोपूर्य्यते । पूर्त्तः । पूर्णं व्यापृतमिति धात्वन्तरस्य रूपम् ।

स्तॄ हिंसायाम् । १८ । स्तृणाति । स्तूर्णः । स्तूर्णिः । पवर्गीयबकारात् परो न ऋकारोऽयमिति तत्प्रकरणानुरोधेन अन्यत्र स्तॄ हिंसायामित्यत्रापि नोपदिष्टः । (3)

वॄ वरणे । १९ । वृणाति । वूर्णम् । वूर्णिः । (4)

भॄ भर्त्सने । २० । भृणाति । भूर्णम् । भूर्णिः । भरः । निर्भरः । भरिमम् (5) ।

दॄ विदारणे । २१ । दृणाति । ददार । ददरतुः दद्रतुः । दारयति । ण्यन्ताल्लुङ् अददरत् । दीर्णम् । दरः । दरी । दीर्णिः । दाराः ।

जॄ वयोहानौ । २२ । जृणाति । जजार । जजरतुः जेरतुः । जीर्णम् । जीर्णिः ।

चॄ इत्येके । २३ । चृणाति । चीर्णम् । चीर्णिः । (6)

नॄ नये । २४ । नृणाति । ननार । ननरतुः । नीर्णम् । नीर्णिः । नरः । नारी ।

न्वी इत्येके । २५ । न्विनाति । न्वीनः । न्वीनिः ।

ॠ गतौ । २६ । ऋणाति । अराञ्चकार । अरिता अरीता । आर्णात् । ईर्य्यात् । आरीत् । अरिरिषति अरिरीषति ईर्षिषति । ईर्त्वा । समीर्णम् । समीर्णिः ।

गॄ शब्दे । २७ । गृणाति । जिगरिषति जिगरीषति जिगीर्षति । गीर्णः । गीर्णिः । गीः । गिरी । गिरः ।

कॄ हिंसायाम् । २८ । कृणाति । कीर्णः । कीर्णिः । कॄ इत्यनेनैव

(3) अयं धातुर्माधवीयधातुवृत्तौ भट्टोजिग्रन्थे वा न दृश्यते ।

(4) अस्य वृञ्वत् रूपम् । अपि तु नायमात्मनेपदी । कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थः उपयोगः । तेनास्योपादानं न व्यर्थम् ।

(5) भरणेन निर्वृत्तमिति भावप्रत्ययान्तादिमब्वक्तव्य ( ४।४।२०, वा ) इतीमप् ।

(6) चॄ इत्यत्र "धॄ इति लेके इति मैत्रेयः । धृणातीत्यादि" इति धातुवृत्तौ मुद्रितम् । सिद्धान्तकौमुद्याञ्च "झॄ इत्येके । धॄ इत्यन्ये ।" इति वर्त्तते ।

सिद्धे कॄ इत्येतस्य स्वादिवद् द्विष्पाठफलं कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थम् । एवं वॄ इत्यस्य च ।

मॄ इत्येके । २९ । मृणाति । मूर्णम् । मूर्णिः । (7) इति उदात्ताः परस्मैपदिनः शॄप्रभृतयः ।

ज्या वयोहानौ । ३० । जिनाति । जीयते । जिज्यौ । ज्याता । ज्यास्यति । जीयात् । अज्यासीत् । जिज्यासति । जेजीयते । ज्यापयति । जीत्वा । जीनः । प्रज्याय । ज्यानिः । ब्रह्मज्यः । (8)

व्ली वरणे । ३१ । व्लिनाति । विव्लाय । व्लेता । अव्लैषीत् । विव्लीषति । वेव्लीयते । व्लेपयति । व्लीत्वा । व्लीनम् । व्लीनिः ।

री गतिरेषणयोः । ३२ । रिणाति । रिराय । रिर्यतुः । अरैषीत् । रेपयति । रीणम् । रीणिः ।

ली श्लेषणे । ३३ । लिनाति । लिलाय ललौ । लिल्यतुः । विलास्यते विलेष्यते । लीनम् । लीनिः ।

प्ली च । ३४ । श्लेषण इत्यपीच्छते । प्लिनाति । प्लीनम् (9) ।

ह्लदिति । ल्वादिपरिसमाप्तेः । प्वादयस्त्वागणान्ताः । तेषामपि समाप्त्यर्थमत्र वृत्करणमित्येके । तेषां व्रीणाति भ्रीणातीति दीर्घः । आगणान्तत्वेऽपि भ्रीपर्यन्ता एव चतुर्विंशतिरुपयुज्यन्ते । (10)

व्री वरणे । ३५ । व्रीणाति । व्रीतम् । व्रीतिः ।

भ्री भरणे । ३६ । भ्रीणाति । भ्रीतम् । भ्रीतिः ।

क्षीष् हिंसायाम् । क्षीणाति । क्षिया । क्षीत्वा । क्षीतवान् । (11) क्षीतम्

---

(7) अत्र माधवः—"मृ हिंसायामित्येके इति सेवेयः । एवं वदतोऽस्य पूर्वं मृणातेः पाठोऽनभिमत इति प्रतीयते ।" इति ।

(8) ब्रह्म जिनातीति क्विधौ सर्वत्र प्रसारणिभ्यो डः इति ( ३।२।३, वा ) वचनाद् डप्रत्ययः ।

(9) ग घ ङ-च पुस्तकेषु तु "ल्वी च । श्लेषण इत्यपीच्छते । ल्विनाति । ल्वीनम्" इति पाठः ।

(10) "आगणान्तत्वेऽपि भ्रीपर्यन्ता एव ते चतुर्विंशतिरेवं इष्यन्ते । अन्येषामनुपयोगादिति मान्द्राजपुस्तकद्वये पाठः ।

(11) क्षियो दीर्घादिति (८।२।४६) तुक्तदीर्घस्य क्षियतेरेवेत्याहुः । व्रीभ्रीक्षीष्विति "एषां त्रयाणां ह्रस्वः । केषाञ्चिन्मते तु न ।" इति भट्टोजिः ।

ज्ञा अवबोधने । ३७ । जानाति । प्वादीनां ह्रस्व इति (७।३।८०) ह्रस्वत्वमिह नास्ति । दीर्घान्तादेशविधानबलात् । ह्रस्वत्वे वातो दीर्घो यञीति (७।३।१०१) दीर्घत्वम् । सर्पिषो जानीते । मधुनो जानीते । जज्ञौ । ज्ञाता । अज्ञासीत् । जिज्ञासते । जाज्ञायते । ज्ञापयति । ज्ञातिः । ज्ञातम् । सर्वज्ञः । प्रज्ञानम् । प्राज्ञः । संज्ञा । पथिप्रज्ञः । मनसाज्ञायी ।

बन्ध बन्धने । ३८ । बध्नाति । बबन्ध । बन्धा । भन्त्स्यति । बध्नातु । बधान । बध्यात् बध्नीत । अभान्त्सीत् । बिभन्त्सति । बाबध्यते । बन्धयति । बन्धः । बद्धा । उद्बध्य । बद्धः । अजन्तपरस्मैपदिषु चास्योपदेशोऽनिट्प्रकरणानुरोधात् । इति परस्मैभाषाः । ज्याप्रभृतय एते परस्मैपदिनः । अनुदात्ताः ।

वृङ् सम्भक्तौ । ३९ । वृणीते । वव्रे । वरिता वरीता । वरिष्यते वरीष्यते । वरिषीष्ट वृषीष्ट । अवृत अवरिष्ट अवरीष्ट । विवरिषते वुवूर्षते । वेव्रीयते । वर्य्या । वराकः । आत्मनेभाषः । उदात्तः ।

श्रन्थ मोचनहर्षणयोः । ४० । श्रथ्नाति । श्रथ्नीते मेखला स्वयमेव । शश्रन्थ । शश्रन्थतुः श्रेथतुः । श्रन्थिष्यति । श्रथ्यात् । अश्रन्थीत् । अश्रन्थिष्ट मेखला स्वयमेव । शिश्रन्थिषति । शाश्रथ्यते । श्रन्थना । श्रन्थित्वा श्रथित्वा ।

मन्थ विलोडने । ४१ । मथ्नाति । मथ्यते । ममन्थ । अमन्थीत् । अमन्थि । मन्थाः । मन्थानौ । मन्थतीति भ्वादिपाठात् ।

श्रन्थ ग्रन्थ सन्दर्भे । ४२।४३ । ग्रथ्नाति । ग्रथ्नीते माला स्वयमेव । अग्रन्थिष्ट माला स्वयमेव । ग्रन्थिः । अर्थभेदाच् श्रन्थेः पुनः पाठः । श्रथ्नाति ।

कुन्थ संश्लेषणे । ४४ । कुथ्नाति । चुकुन्थ । कुथित्वा कुन्थित्वा । कुन्था । (12)

मृद क्षोदे । ४५ । मृद्नाति । ममर्द । मर्दिता । मृदित्वा । मर्दनम् । मृत् ।

मृड़ च । ४६ । मृड़्नाति । ममर्ड । मृड़ित्वा । मृड़तीति तुदादिपाठात् ।

---

(12) कुन्थ संक्लेशे इति ङपुस्तके पाठः ।

गुध रोषे। ४७। गुध्नाति। गुधित्वा। गुधितम्। गुध्यतीति गणान्तरे।

कुष निष्कर्षे। ४८। कुष्णाति। चुकोष। निष्कोषिता निष्कोष्टा। निष्कोषिष्यति निष्कोक्ष्यति। निरकोषीत् निरकुक्षत्। निश्चुकोषिषति निश्चुकुक्षति। निष्कुषितम्। कुष्यति पादः स्वयमेव कुष्यते पादः स्वयमेव।

क्षुभ सञ्चलने। ४९। क्षुभ्नाति। क्षुभ्नीतः। क्षुभ्नातु। क्षुभाण। अक्षोभीत्। क्षोभते क्षुभ्यतीति गणान्तरपाठात्।

णभ तुभ हिंसायाम्। ५०।५१। नभ्नाति। प्रणभ्नाति। प्रणनाभ। प्रणेभतुः। प्राणभ्नात्। तुभ्नाति। नभते नभ्यति तोभते तुभ्यतीति गणान्तरपाठात्।

क्लिशू विबाधने। ५२। क्लिश्नाति। क्लेशिता क्लेष्टा। चिक्लेशिषति चिक्लिशिषति चिक्लिक्षति। क्लिशित्वा क्लिष्ट्वा। क्लिशितं क्लिष्टम्। क्लेशः। क्लेश्यम्। क्लिश्यत इति दैवादिकस्य।

अश भोजने। ५३। अश्नाति। आश। अशिता। अशिष्यति। अश्नातु। अशान। अश्यात्। आशीत्। अशिशिषति। अशाश्यते। अनाश्वान् (13)। अशितुम्। अशनम्। अश्नन्।

उध्रस उञ्छे। ५४। ध्रस्नाति। दध्रास। ध्रसिता। ध्रसित्वा ध्रस्त्वा। ध्रस्तः। उदितो वेति (७।२।५६) विशेषणार्थमुदित्त्वम्। केचित्तूत्पूर्वस्य ध्रसे र्गणपाठमिच्छन्ति। तथाच उध्रस्नातीति रूपम्। नतु ध्रस्नातीति।

इष आभीक्ष्ण्ये। ५५। इष्णाति। इयेष। एषिता।

विष विप्रयोगे। ५६। विष्णाति। विषम्।

प्रुष प्लुष स्नेहनमोचनपूरणेषु। ५७।५८। प्रुष्णाति। प्रोषिष्यति। प्रोषित्वा प्रुषित्वा। प्रुषितम्। प्लुष्णाति। प्लोषिष्यति। प्लोषित्वा प्लुषित्वा। प्लुषितम्। दाहार्थे श्वादिगणे एतौ उदितावुक्तौ।

पुष पुष्टौ। ५९। पुष्णाति। अपोषीत्। पोषिता। पोषतीति भ्वादौ। पुष्यतीति दैवादिकस्य।

---

(13) धृतजयधृतेरनाशुष इति भारविप्रयोगः।

मुष स्तेये । ६० । मुष्णाति । मोषिता । मुमुषिषति । मुषित्वा । मुषितम् (14) ।

खच भूतप्रादुर्भावे । ६१ । खच्ञाति । चखाच । खचिता । खच्ञातु । चखान । खच्यात् । अखचीत् अखाचीत् । खचितम् ।

खव इत्येके । ६२ । खौनाति । चखाव । खविता । खौनातु । खौनीहि । अखौनात् । खौनीयात् । (15) खवितम् । खु इति केचित् । खुनाति । इति परस्मैभाषा उदात्ताः । हलन्ता एते अन्यादयः परस्मैपदिनः सेटः । (16)

ग्रह उपादाने । ६३ । गृह्णाति गृह्णीते । जग्राह जगृहे । जगृहिव जगृहिवहे । ग्रहीता । ग्रहीष्यति ग्रहीष्यते । अग्रहीत् अग्रहीष्ट । अग्रहीढ्वम् अग्रहीध्वम् अग्रहीष्ट । जिघृक्षति जिघृक्षते । जरीगृह्यते । ग्रहीतुम् । गृहीतम् । गृहीतिः । ग्रहः । उद्ग्राहः । ज्योतिषि ग्रहः । जलचरे ग्राहः । गृहम् । ग्राही । इति विभाषित उदात्तः । अयं स्वरितेदिति-पृथगस्योपन्यासः । वृदिति क्र्यादिपरिसमाप्तिः ।

इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ
धातुप्रदीपे क्र्यादीनां वृत्तिः ॥९॥

---

## अथ चुरादय उच्यन्ते ।

चुर स्तेये । १ । चोरयति । (1) चुरादि णिजन्ताण् णिचश्चेत्यात्मनेपदं (१।३।७४) न भवतीत्येके । धातुपारायणे त्वात्मनेपदमुदाहृतम् । चोरयत

---

(14) सैन्यरेणुमुषितार्कदीधितिरिति रघुकाव्ये । कथं तर्हि मुष्टं प्रति ग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येनेति शाकुन्तले ? चिन्त्यम् । आदितश्चेत्यत्र (७।२।१६) चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्त वान्तादिवदित्येके । अन्ये तु उणादिषु मुष्टमिति द्रष्टव्यम् इत्याहुः ।

(15) खौनातीत्यवोठि कृते (६।४।१९) एत्येधत्यूठ्स्विति (६।१।८९) वृद्धिः ।

(16) अस्मात् परं हेट चेति धातुं भट्टोजिः पठति । "अत्र क्वचित् हेठ चेति पठ्यते" इति तु माधवः ।

(1) सत्यापपाशेत्यादिना (३।१।२५) स्वार्थे चुरादिभ्यो णिज्विधानादणिचश्चुरादेः प्रयोगाभावः । अनित्यण्यन्ताश्चुरादय इति त्वेके । एतत्तु भाष्यविरुद्धम् । घुषिरविशब्दने इत्यस्य विचारे "ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिज्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवा इत्येष प्रयोग उपपन्नो भवती"ति भगवता विशिष्टविषयत्वेन अनित्यण्यन्तत्वस्याभिधानात् । अतएवा धृषादेति गणसूत्रस्य न वैयर्थ्यम् ।

इति। चोरयाञ्चकार चोरयाञ्चक्रे। चोरयिता। चोरयिष्यति चोरयिष्यते। चोरयतु चोरयताम्। अचोरयत् अचोरयत। चोरयेत् चोरयेत। चोर्य्यात् चोरयिषीष्ट। अचूचुरत् अचूचुरत। चुचोरयिषति चुचोरयिषते। कर्म्मणि चिण्वदिट्पक्षे तस्यासिद्धत्वाण्णिलोपः। चोरयिष्यते चोरिष्यते। चोरिता चोरयिता। चोरयिषीष्ट वा चोरिषीष्ट धनं देवदत्तेन। ण्यन्तेभ्यो यङ्नास्तीति सूचिसूत्रीत्यत्र (३।१।२२, वा) न्यासकारः। रूपावतारे तु णिलोपे प्रत्ययोत्पत्तेः प्रागेव कृते सत्येकाच्त्वाद् यङुदाहृतश्चोचूर्य्यत इति। चोरः। चौरः (2)। चोरणा। चुरेतिच्छत्रादिगणपाठात् सिध्यति।

चिति स्मृत्याम्। २। चिन्तयति। चिन्तयाञ्चकार। चिन्ता। चिन्तिपूजिकथिकुम्बिचर्च्चश्चेति (३।३।१०५) अकारप्रत्यये विधातव्ये यदङ्विधानं तद्गुणाभावार्थम्। तत्सामर्थ्यात् कदाचिण्णिलोपो नास्तीति तत्र चिन्तियेतीयङुदाहर्त्तव्यः। एवं पूजिया।

यत्रि संकोचे। ३। यन्त्रयति। यन्त्रणा।

स्फुड़ि परिहासे। ४। स्फुण्डयति। स्फुण्डिका।

लक्ष दर्शनाङ्कनयोः। ५। लक्षयति। लक्ष्यम्। लक्षणम्। लक्ष्मीः। लक्ष्मीत्यपि केचित्। लक्ष्मणः। स्वरितेत्त्वमस्य केचित् प्रतिपद्यन्ते। लक्षयति लक्षयते इति। एवञ्चास्य स्वरितेत्त्वं ज्ञापकं णिचश्चेति (१।३।७४) चुरादिणिजन्तादात्मनेपदं न भवतीति।

कुद्रि अनृतभाषणे। ६। कुन्द्रयति। अचुकुन्द्रत्।

लड उपसेवायाम्। ७। लाड़यति लाड़याञ्चकार।

मिदि स्नेहने। ८। मिन्दयति।

ओलड़ि उत्क्षेपणे। ९। ओलण्डयति। ओलण्डकः। ओलण्डा। ओलण्डितः। (3)

---

(2) चोर इति पचाद्यच्। चौर इति प्रज्ञादित्वात् स्वार्थेऽण्।

(3) क्वचिदुकारादिर्दृश्यते। उलण्डयतीत्यादि। चपुस्तके तु लण्डयति। लण्डकः। लण्डेति वर्त्तते। अत्र माधवः—"केचिदोदितं पठन्ति। तेषां मते लण्डयति। अपरे तूकारादिं पठन्ति। तदोकारं धात्ववयवमुदाहरतां मैत्रेयादीनाम्, इत्संज्ञकत्वमभिदधता मन्येषाञ्च, सर्वेषामनभिमतम्।" इति।

जल अपवारणे । १० । जालयति । जालम् ।

पीड़ अवगाहने । ११ । पीड़यति । अपीपिड़त् अपिपीड़त् । पीड़ा ।

नट अवस्यन्दने । १२ । चौरस्योन्नाटयति । प्रनाटयति । (4)

श्रथ प्रतियत्ने । १३ । श्राथयति । अशिश्रथत् । (5)

बध संयमने । १४ । बाधयति । अबीबधत् ।

पॄ पूरणे । १५ । पारयति । पार्य्यते । पारयः । पारकः ।

ऊर्ज बलप्राणधारणयोः । १६ । ऊर्जयति । और्जिजत् । ऊर्जिजयिषति । ऊर्जा । ऊर्जस्वी । ऊर्जितम् । ऊर्क् । ऊर्जौ ।

वर्ण चूर्ण प्रेरणे । १७।१८ । वर्णयति । चूर्णयति । वर्णं श्लक्ष्णाति वर्णयति । चूर्णैरवध्वंसयति चूर्णयतीति व्युत्पत्त्यन्तरम् ।

प्रथ प्रख्याने । १९ । प्राथयति । अपप्रथत् ।

पृथ प्रक्षेपे । २० । पर्थयति । अपीपृथत् अपपर्थत् ।

षम्ब सम्बन्धे । २१ । सम्बयति । सम्बयाञ्चकार । अससम्बत् ।

शम्ब च । २२ । शम्बयति । शम्बलम् ।

भक्ष अदने । २३ । भक्षयति । भक्षयाञ्चकार । अबभक्षत् ।

कुट्ट छेदनभर्त्सनयोः । २४ । कुट्टयति मांसम् । कुट्टकः । षाकन् कुट्टाकः । कुट्टाकी । कुट्टः । कौट्टिकः । कुट्टनम् । कुट्टिमम् ।

पुट्ट चुट्ट अल्पीभावे । २५।२६ । पुट्टयति । चुट्टयति ।

अट्ट षुट्ट अनादरे । अट्टयति । अट्टिटत् । अट्टिटयिषति । सुट्टयति । सुट्टयाञ्चकार । असुषुट्टत् । सुषुट्टयिषति ।

लुण्ठ स्तेये । २७ । लुण्ठयति । षाकन् लुण्ठाकः । लुण्ठाकी ।

शठ श्वठ संस्कारगत्योः । २८।२९ । शाठयति । श्वाठयति ।

श्वठि इत्येके । ३० । श्वण्ठयति ।

---

(4) अयं न णोपदेशः ।

(5) भट्टोजिमते श्रथ प्रयत्ने इति । माधव आह "श्रथ प्रस्थाने इति मैत्रेय" इति । अस्माकं पुस्तकेषु तु एतन्नास्ति । परन्तु सर्वत्रैव श्रथ प्रतियत्न इति पाठो लभ्यते ।

तुजि पिजि हिंसाबलादाननिकेतनेषु । ३१।३२ । तुञ्जयति । पिञ्जयति । एतौ घटादिदण्डके गणान्तरेऽपि पठितौ ।

पिस गतौ । ३३ । पेसयति ।

षान्त्व सामप्रयोगे । ३४ । सान्त्वयति । अससान्त्वत् । सिषान्त्वयिषति ।

श्वल्क वल्क परिभाषणे । ३५।३६ । श्वल्कयति । वल्कयति ।

ष्णिह स्नेहने । ३७ । स्नेहयति । असिष्णिहत् । सिष्णेहयिषति ।

स्मिट अनादरे । ३८ । स्मेटयति ।

स्मिङ् इत्येके । ३९ । स्माययते । (6)

श्लिष आलिङ्गने । ४० । श्लेषयति ।

पथि गतौ । ४१ । पन्थयति ।

पिच्छ कुट्टने । ४२ । पिच्छयति ।

छदि संवरणे । ४३ । छन्दयति ।

श्रण दाने । ४४ । श्राणयति । विश्राणय । विश्राणनम् । श्रणयतीति हेतुमण्णिच् (7) ।

तड़ आघाते । ४५ । ताडयति । अतीतड़त् । ताड़ितः । तड़ित् ।

खड़ खड़ि कड़ि भेदने । ४६।४८ । खाड़यति । खण्डयति । कण्डयति ।

कुड़ि रक्षणे । ४९ । कुण्डयति । कुण्डम् ।

गुड़ि वेष्टने । ५० । गुण्डयति ।

वटि विभाजने । ५१ । वण्टयति । वटि विभजन इति भ्वादौ पठ्यते । ततो हेतुव्यापारे णिचि विभाजनेऽर्थे वण्टयतीति सिध्यतीति । किन्त्वसौ कर्त्रभिप्राये क्रियाफले आत्मनेपदी । अनेन पुनस्तत्रापि वण्टयतीति परस्मैपदं स्यात् । अन्ये तु पुनर्वैचित्र्यार्थमस्योपादानमिच्छन्ति ।

चडि कोपे । ५२ । चण्डयति । चण्डः ।

मडि भूषायाम् हर्षे च । ५३ । मण्डयति । मण्डना । मण्डनः । मण्डयन्तः ।

---

(6) चपुस्तके स्मि इत्येके स्माययतीत्यस्ति । माधवस्त्वाह स्मिङ् इत्येके इति मैत्रेय इति ।

(7) घटादिपाठान्मित्त्वम् ।

भडि कल्याणे। ५४। भण्डयति। भण्डयाञ्चकार।

छर्द वमने। ५५। छर्दयति। प्रच्छर्दिका।

पुस्त बुस्त आदरानदरयोः। ५६।५७। पुस्तयति। पुस्तकम्। बुस्तयति।

चुद सञ्चोदने। ५८। चोदयति। चोदयामास। चोद्यम्।

नक्क धक्क नाशने। ५९।६०। नक्कयति। प्रनक्कयामास। धक्कयति।

चक्क चुक्क व्यथने। ६१।६२। चक्कयति। चक्कनम्। चुक्कयति।

क्षल शौचकर्मणि। ६३। क्षालयति वस्त्रम्। प्रक्षालयाञ्चकार। क्षालः। अवक्षालः।

तल प्रतिष्ठाकरणे। ६४। तालयति। तालम्। तलमित्यपि भवति। चुरादिणिचो यथाभिधानमनित्यत्वात्। तत्र चुषिरविशब्दन इति विशब्दने प्रतिषेधमेव ज्ञापकं सामान्य मिच्छन्ति। (8)

तुल उन्माने। ६५। तोलयति। तोलयामास। णिचोऽनित्यत्वात् तुला। तुलां करोति तुलयति। (9)

दुल उत्क्षेपे। ६६। दोलयति। दोला। दुलिः। दौलेयः।

पुल महत्त्वे। ६७। पोलयति। पोलकम्।

चुल समुच्छ्राये। ६८। चोलयति। चोलः।

मूल रोहणे। ६९। मूलयति। मूलम्। मूलकम्।

कल पिल क्षेपे। ७०।७१। कालयति। कालः। पेलयति। पेलः।

बिल भेदने। ७२। बेलयति।

तिल स्नेहने। ७३। तेलयति।

बल भृतौ। ७३। बालयति। बालः। बाला। (10)

पल रक्षणे। ७५। पालयति।

---

(8) एतेन णिजभावेऽपि मैत्रेयमते तलशब्दः। अन्ये तु संज्ञापूर्वकविधेरनित्यत्वादृद्ध्यभावेऽपि तलमिति व्युत्पादयन्ति।

(9) मतान्तरे तुल्यार्थैरिति निर्देशाद् (२।३।७२) निपातनेऽङि णिलुकि तुलेत्याहुः। णिजभावे प्रमाणाभावात्।

(10) गघपुस्तकयोश्चल भृतौ। चलयतीति पाठान्तरम्। तदेव भट्टोजिमाधवादिसम्मतम्।

लूष हिंसायाम्। ७६। लूषयति। लूषकः।

शूर्प माने। ७७। शूर्पयति। शूर्पः।

चुट च्छेदने। ७८। चोटयति।

मुट सञ्चूर्णने। ७९। मोटयति। मोटनम्।

पसि नाशने। ८०। पंसयति परम्। परिपंसनम्। पांसुः। पांसुरः।

व्रज मार्गसंस्कारयोः। ८१। गतौ च। व्राजयति। (11)

चपि गत्याम्। ८२। चम्पयति। चम्पयामास। चम्पः।

क्षपि क्षान्त्याम्। ८३। क्षम्पयति।

क्षजि कृच्छ्रजीवने। ८४। क्षञ्जयति। क्षञ्जयामास।

श्वर्त्त गत्याम्। ८५। श्वर्त्तयति। श्वर्त्तयाञ्चकार। श्वर्त्तयामास।

ज्ञप मिच्च। ८६। ज्ञपयति। जिज्ञपयिषति ज्ञीप्सति। ज्ञप्तः ज्ञपितः। ज्ञापने मारणादिषु चाभिधानमस्यैव। तत्र घटादित्वात् सिध्यति। कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थं तत्राप्यस्य वृत्तिरिष्यते। (12)

यम च परिवेषणे। ८७। चकारेण मिदित्यनुकृष्यते। यमयति। यमयाञ्चकार।

चह कल्कने। ८८। अत्रापि मिदिति वर्त्तते। चहयति।

बल प्राणने। ८९। मिदित्येव। बलयति।

(1) नान्ये मितोऽहेतौ। (13) ज्ञपादि धातुभ्योऽन्ये चौरादिका अहेतौ णिचि स्वार्थिके णिचि मितो न भवन्ति। तेन अमशमिप्रभृतिषु मित्त्वाभावं ज्ञपादिभिन्नेषु चौरादिकेषूपदर्शयिष्यते।

घट्ट चलने। ९०। घट्टयति। घट्टना।

खट्ट संवरणे। ९१। खट्टयति। अचखट्टत्।

---

(11) ङपुस्तके वज मार्ग संस्कारगत्योः। वाजयति। मार्गयति इति पाठः। गपुस्तके वज मार्गसंस्कारगत्योः। वाजयति अवीवजदिति पाठः। घपुस्तके व्राजयति अवीव्रजदिति।

(12) वा दान्तेत्यत्र (७.२।२२) ज्ञप्त इति निपातनं ज्ञपेरिति निष्ठायां सेटीत्यत्र (६।४।५२) कैयटपदमञ्जर्य्योरुक्तत्वाद् इह ज्ञप्तः ज्ञपित इति सर्वेषेणोदाहरणस्य प्रदर्शनमयुक्तमिति माधवः।

(13) गणेऽस्मिन्निदमेकं गणसूत्रम्। एवञ्चात्र गणसूत्राणि १४ संख्याकानि।

षट्ट स्फिट चुवि हिंसायाम् । ९२-९४ । सट्टयति । सिषट्टयिषति । स्फेटयति । चुम्बयति । चुभीत्येके । चुम्भयति ।

पूल संघाते । पूलयति । ९५ । (14)

पुंस अभिवर्धने । ९६ । पुंसयति पुंसयामास ।

पुस्त संघाते । ९७ । पुस्तयति । पुस्तकम् ।

टकि बन्धने । ९८ । टङ्कयति । टङ्कः ।

धूस कान्तिकरणे । ९९ । धूसयति । धूसयामास । धूसरः । धूष इत्येके । धूषयति ।

कीट बन्धने । १०० । कीटयति । कीटः ।

चूर्ण संकोचने । १०१ । चूर्णयति ।

पूज पूजायाम् । १०२ । पूजयति । अपूपुजत् । पूजा । पूगः ।

अर्क स्तवने । १०३ । अर्कयति । अर्कः ।

शुठ आलस्ये । १०४ । शोठयति । शोठः ।

शुठि शोषणे । १०५ । शुण्ठयति ।

जुड़ प्रेरणे । १०६ । जोड़यति । जोड़ितम् ।

गज मार्ज शब्दे । १०७।१०८ । गर्जयति । मार्जयति । (15)

घृ संप्रस्रवणे । १०९ । घारयति । घारयामास ।

पचि विस्तारे वचने । ११० । पञ्चयति । प्रपञ्चः । पञ्च इति भौवादिकस्य पञ्चतेः ।

तिज निशाने । १११ । तेजयति । तेजनम् ।

कृत संशब्दने । ११२ । कीर्त्तयति । अचीकृतत् अचिकीर्त्तत् । अचकीर्त्तदिति तु धातुपारायणम् । कीर्त्तिः । कीर्त्तनम् । कीर्त्तनेति युजपि कालापैरिष्यते ।

---

(14) अस्मात् प्राक् गघङचपुस्तकेषु प्युस (ष) उत्सर्गे (उत्क्षेपे) । प्योसयति (प्योषयति) व्यप (व्यय)-क्षेपे । व्यापयति (व्याययति) । विव्यापयामास । व्याप इति पठितम् । माधवस्त्वाह एतान् मैत्रेयादयो न पठन्तीति ।

(15) ङचपुस्तकयोर् गर्ज मार्ज गर्जयति मार्जयतीति पाठः ।

वर्द्ध च्छेदनपूरणयोः ११३। वर्धयति। वर्धयाञ्चकार।

कुवि आच्छादने। ११४। कुम्बयति। कुम्बा।

लुवि तुवि तुपि अर्द्दने। ११५।११७। लुम्बयति। तुम्बयति। तुम्बो। तुम्पयति।

क्न (क्ल)प व्यक्तायां वाचि। ११८। क्ना (क्ला)पयति। क्ना (क्ला)पयामास।

चुटि च्छेदने। ११९। चुण्टयति। चुडि इत्येके।

इल प्रेरणे। १२०। एलयति। प्रेलयति। ऐलिलत्। मा भवानिलिलत्। (16)

म्रच्च म्रक्षणे। १२१। म्रक्षयति। म्रक्षणम्। म्रक्षयामास। अन्यत्र म्रक्षति।

म्लेच्छ अव्यक्तायां वाचि। १२२। म्लेच्छयति। म्लेच्छयामास। म्लेच्छतीति गणान्तरे।

ब्रूस बर्ह हिंसायाम्। १२३।१२४। ब्रूसयति। बर्हयति।

गर्ध अभिकाङ्क्षायाम्। १२५। गर्धयति। गर्धयामास।

पूर्व निकेतने। १२६। पूर्वयति। पूर्वयामास।

जसि रक्षणे। १२७। जंसयति।

ईड़ स्तुतौ। १२८। ईड़यति। ईड़यामास। ऐड़िड़त्।

जसु हिंसायाम्। १२९। चौरस्योज्जासयति। (17)

पिड़ि संघाते। १३०। पिण्डयति। पिण्डः।

रुष रोषे। १३१। रोषयति। रुट इत्येके। रोटयति।

डिप क्षेपे। १३२। डेपयति।

ष्टूप समुच्छ्राये। १३३। स्तूपयति। अतूष्टुपत्। स्तूपः।

इति परस्मैभाषा उदात्ताः। आ कुस्मादात्मनेपदिनः। कुस्मपर्य्यन्ता आत्मनेपदिन इत्यर्थः।

---

(16) क्नूदस्यस्य न चङ्। नोनयतिध्वनयत्येलयत्यर्दयतिभ्य इत्यनेन (३।१।५१)। काममैलयोरिति।

(17) उदित्करणादस्य णिजभिल्य इति ज्ञापितम्। तेन जसति। जसित्वा जस्त्वा जासयित्वा।

चित सञ्चेतने । १३४ । चेतयते । चेतयमानः । चेतयामास । चिचेतयिषते ।

दशि दंशने । १३५ । दंशयते । (18)

दसि दर्शनहिंसयोः । १३६ । दंसयते । दंसितम् ।

डप डिप संघाते । १३७।१३८ । डापयते । डेपयते ।

तत्रि कुटुम्बधारणे । १३९ । तन्त्रयते । तन्त्रम् । स्वतन्त्रः ।

मन्त्रि गुप्तभाषणे । १४० । मन्त्रयते । अमन्त्रयत । अममन्त्रत । मन्त्रः ।

स्पश ग्रहणश्लेषणयोः । १४१ । स्पाशयते । अन्यत्र स्पशति स्पशते ।

तर्ज भर्त्स सन्तर्जने । १४२।१४३ । तर्जयते । तर्जना । तर्जतीति भ्वादिपाठात् । भर्त्सयते । भर्त्सना ।

बस्त गन्ध अर्दने । १४४।१४५ । अर्दने गतौ हिंसायां याचने वेत्यर्थः । बस्तयते । बस्तः । गन्धयते । गन्धः । गन्धकम् ।

हिष्क हिंसायाम् । १४६ । हिष्कयते । हिष्कितम् ।

णिष्क परिमाणे । १४७ । निष्कयते । प्रणिष्कयते । निष्कः ।

लल ईप्सायाम् । १४८ । लालयते । लालना ।

कूण संकोचने । १४९ । कूणयते । कूणिः ।

तूण पूरणे । १५० । तूणयते । तूणः । तूणीरः ।

भ्रूण आशंसायाम् । १५१ । भ्रूणयते । भ्रूणयाञ्चक्रे । भ्रूणः । भ्रूणहा । भ्रूणहत्या ।

शठ श्लाघायाम् । १५२ । शाठयते । शाठना ।

यक्ष पूजायाम् । १५३ । यक्षयते । यक्षः ।

स्यम वितर्के । १५४ । स्यामयते । न्यासकृत् तु स्य(श्य)ल वितर्क इति नाचार्य्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्य इति (६।२।१३३) स्वरसूत्रे स्या (श्या) लसंप्रतिपत्त्यर्थं पठितवान् । (19)

---

(18) अनन्तरं गघपुस्तकयोः अर्द हिसि हिंसायाम् । अर्दयते । हिंसयते इति दृश्यते । ततो दस इति तत्र पाठः । तस्य दासयते । दासितुमिति चोदाहरणं दत्तम् ।

(19) स्या (श्य) ल पुत्र इति । स्य (श्य)ल वितर्क इत्यस्माच्चुरादिणिजन्तात् पचाद्यच् । तेन स्या (श्य) [लशब्दोऽन्तोदात्त इति हि तत्र न्यासकारवाक्यम् ।

गूर उद्यमने । १५५ । गूरयते । गूरणा ।

ग्रम लक्ष आलोचने । १५६।१५७। ग्रामयते । अजीग्रमत । लक्षयते अललक्षत । आलोचनादन्यत्र लक्षयतीति परस्मैपदमेव ।

कुत्स अवक्षेपणे । १५८ । कुत्सयते । अकुत्सयत । अचुकुत्सत । कुत्सा ।

भल आमण्डने । १५९ । भालयते । उदभालयत ।

कूट अप्रमादे । १६० । कूटयते । कुट प्रतापन इत्येके । कोटयते । अन्यत्र कोटयति ।

लुट च्छेदने । १६१ । त्रोटयते ।

वञ्चु प्रलम्भने । १६२ । वञ्चयते । अववञ्चत । वञ्चना । वञ्चतीति भ्वादिपाठात् ।

वृषु शक्तिसम्बन्धे । १६३ । वर्षयते । अववर्षत अवीवृषत । वर्षणा । अन्यत्र वर्षतीति ।

मद तृप्तियोगे । १६४ । मादयते । अन्यत्र माद्यति ।

दिवु परिकूजने । १६५ । देवयते परिदेवकः । अन्यत्र दीव्यतीति । वञ्चु-प्रभृतिमुदितं पठन्ति । स एवायं धातुरर्थान्तरे चुरादिरित्येवंबोधनार्थम् । (20)

गॄ विज्ञाने । १६६ । गारयते । अन्यत्र गिरति । गृणातीति ।

विद वेदनाख्याननिवासेषु । वेदयते । १६७ । निवेदयाञ्चक्रे । अन्यत्र वेत्ति वेद । विद्यते । विन्दते विन्दति । विन्ते । (21)

मन स्तम्भे । १६८ । मानयते । अन्यत्र मन्यते । मनुते ।

यु जुगुप्सायाम् । १६९ । यावयते । अन्यत्र यौति । युनाति ।

कुस्म कुस्मयने । १७० । कुत्सितस्मयनेऽस्य वृत्तिरिष्यते । कुस्मयते । कुस्मयिता । अकुस्मयत । अचुकुस्मत । चुकुस्मयिषते । कुस्मयितः । कुस्मकः । कुस्मयतेः क्विप् । कूः । कुस्मौ । कुस्मः । (2) कुस्म नाम्नो वेति । कुस्मयत

---

(20) अतो मैत्रेयमते उदित्त्वं प्रत्यभिज्ञानार्थम् । न णिचो विकल्पार्थं भवति । प्रत्यभिज्ञामात्रमेव तस्य फलमिति भावः ।

(21) "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥ १ ॥ इति ।

इति कुस्म इति प्रातिपदिकाद्वा सिद्धमित्यर्थः । कुस्म इत्यस्मात् प्रातिपदिकात् तत्करोतीति णिज्विधेयः । इत्थं णिचि सिद्धे इह त्वात्मनेपदार्थं पठ्यते । न च कुस्म इति प्रातिपदिकं दृष्टमित्याह कुस्ममिति दृष्टमेव । (22) केचित् पुनः कुपूर्वस्य स्मयतेः कुस्मयत इति सिद्धे कुस्मधातुं प्रत्याचक्षते । तान् प्रत्युक्तं कुस्मयतिरकारित इति । कारित इति णिचः पूर्वाचार्य्यसंज्ञा । कुस्मयति रकारित इति चेदण्यन्तः स्मयतिरिति चेदिहापि स्यादित्यर्थः । कोर्नित्य-समासत्वात् । अयुक्तमिदम् । अनन्ता हि निपाताः । कुशब्दोऽपि निपातो नित्यसमासविषयः प्रयुज्यते । ततोऽस्य तिङन्तसन्निकर्षे प्रयोगो न स्यात् (23) । उपसर्गयोगे च । (24) तर्हि कोः प्रागुपसर्गयोग इष्यते । लिङादिप्रत्यये इडागमे द्विर्वचने गुणे भेद उदाहृत एव । (25) अतः कुस्मधातोः कारित एव कर्त्तव्यः । (26) णिजेव कर्त्तव्य इत्यर्थः ।

चितिप्रभृतय एते आत्मनेपदिनः । अथ आ गणान्ताद् धातूननूद्य पुनर्द्वितीयं परस्मैपदिप्रकरणमधुनोच्यते । येऽपि गणान्तरे साक्षान्न दृश्यन्ते तेऽपि शब्विकरणस्य भ्वादेराकृतिगणत्वात् तत्र वेदितव्याः ।

चर्च अध्ययने । १७१ । चर्चयति । चर्चा । अन्यत्र चर्चति ।

वुक्क भाषणे । १७२ । वुक्कयति । अन्यत्र वुक्कति ।

शब्द शब्दक्रियायाम् । १७३ । शब्दयति । भाषणेऽपि शब्दविशेषेऽस्य वृत्तिं स्मरन्ति । शब्दायते । शब्दायमान इति तु शब्दं करोतीति व्युत्पत्त्या । उपसर्गादाविष्कारे । प्रशब्दयति । विशब्दयति ।

---

(22) कुशब्दात् स्मयतेरन्येष्वपि दृश्यत इति (३।२।१०१) डप्रत्यये कुगतिप्रादय इति समासेन (२।२।१८) कुस्मशब्द इति भावः ।

(23) कुगतिप्रादय इत्यत्र (२।२।१८) अतिङिति (२।२।१९) सम्बन्धान्न समासः । अतो नैकपद्यम् ।

(24) ते प्राग् धातोरिति (१।४।८) कुप्रस्मयत इति स्यात् । एवञ्च कुस्मयाञ्चक्र ऽत्याम् न स्यात् । अट् च कोः परः स्यात् कुप्रास्मयत इति ।

(25) चुकुस्मयिषत इत्यत्र कोर्द्वित्वं न स्यादित्यं कुस्मयितेत्यादाविड्भावः कुस्मायक इत्यादिबहूपप्लव-सम्भवः । तेन कारितएव ।

(26) कुस्मधातोः कुस्मधातुस्वाभायेत्यर्थः । कुस्म इति प्रातिपदिकात् कारितेन णिच्प्रत्ययेण धात्वर्थं ( तत् करोतीत्यर्थं ) कुस्मयते इति विकल्प लभ्यत इत्याशयः ।

कण निमीलने । १७४ । काणयति । काणः । अन्यत्र कणति ।

जभि नाशने । १७५ । जम्भयति । जम्भत इतितु जभइत्यस्य रूपम् ।

षूद क्षरणे । १७६ । सूदयति । असूषुदत् । सुषूदयिषति । अन्यत्र सूदते ।

जसु ताड़ने । १७७ । जासयति । अर्थभेदात् पुनः पठ्यते । जस्यतीति दिवादेर्जसु मोक्षण इत्यस्य ।

पश बन्धने । १७८ । पाशयति । पाशाद् विमोचयति विपाशयतीति चोक्तम् । पश बन्धन इति युजादावेके पठन्ति । पाशयति पशति ।

अम रोगे । १७९ । आमयति । आमः । अन्यत्र अमति । अमः ।

चट स्फुट भेदने । १८०।१८१ । चाटयति । उच्चाटनम् । प्रचाटनम् । स्फोटयति आस्फोटयाञ्चकार । स्फोटकः । अन्यत्र स्फुटति । स्फोटते । चुरादिणिचोऽनित्यत्वाच्चटति विचटतीति च ब्रुवते ।

घट संघाते । १८२ । घाटयति । उद्‌घाटनम् । अन्यत्र घटते । घटयति । (27)

(3) हन्त्यर्थाश्च । येऽन्येषु नवसु गणेषु हन्त्यर्थाः सन्ति त इह द्रष्टव्याः । (28) घातयति । तर्हयति । ताड़यति । यस्त्वत्र हन्त्यर्थः पठ्यते स कार्य्य-विशेषार्थं इत्युन्नेयम् ।

दिवु अर्द्दने । १८३ । देवयति शत्रून् । परिकूजने पूर्वं दर्शितः । अन्यत्र दीव्यतीति ।

अर्ज प्रतियत्ने । १८४ । अर्जयति । आर्जिजत् । अन्यत्रार्जति ।

घुषिरविशब्दने । १८५ । घोषयति । अजूघुषत् । घुषिरविशब्दन इत्यत्र (७.२।२३) विशब्दनप्रतिषेधाद् घुषेर्णिज् विकल्प्यत इत्येतत् साधितमनेन । घोषति । "जुघुषुः पुष्यमाणवा" इति विशब्दने सिध्यति । एतदुपलक्षणम् । तेन विचटति तनतीत्यादि सिध्यति । भ्वादिपठितस्य घोषति । अघुषद् अघोषीदिति ।

---

(27) प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिति भारविः । कमलवनोद्घाटनं कुर्वते य इति सूर्य्यशतके ।

(28) ते स्वार्थे णिचं लभन्त इत्यर्थः ।

आङ् क्रन्द सातत्ये। १८६। आङः परः क्रन्दः सातत्ये णिचमुत्पादयति। आक्रन्दयति। आक्रन्दः। आक्रन्दः। आक्रन्दतीत्यन्यत्र।

लस शिल्पयोगे। १८७। लासयति। अन्यत्र लसति। (29)

तसि भूष अलङ्कारे। १८८।१८९। अवतंसयति वतंसयति। अवतंसः वतंसः। भूषयति। अबूभुषत्। भूषयते रथ्यां स्वयमेव। अन्यत्र भूषति।

मोक्ष असने। १९०। असनं क्षेपः। मोक्षयति शरान्। मोक्षयति अस्त्रम्।

अर्ह पूजायाम्। १९१। अर्हयति। अर्हणा। अन्यत्रार्हति।

ज्ञा नियोजने। १९२। आज्ञापयति। अन्यत्र जानाति।

भज विश्राणने। १९३। भाजयति। भाजः। भाजा भाजी। अन्यत्र भजति भजते।

शृधु प्रसहने। १९४। शर्धयति। अन्यत्र शर्धते।

यत निकारोपस्कारयोः। १९५। यातयति। यातना। अन्यत्र यतते। निरश्च धान्यधनयोः। निर्यातयति। प्रतिदाने पूर्ववदुदाहृतम्।

वस स्नेहनच्छेदापहरणेषु। १९६। वासयति। वासना। अवहरणे च। प्रवासयत्यपराधिनम्। अन्यत्र वसति।

चर संशये। १९७। विचारयति। विचारणा। अन्यत्र चरति।

च्यु हसने। १९८। च्यावयति। अन्यत्र च्यवते।

भुवोऽवकल्कने। १९९। अवकल्कनं पीड़नम्। भावयति ब्राह्मणान् तपः।

कृप च। २००। कल्पयति। अन्यत्र कल्पते।

रक लक आस्वादने। २०१। २०२। राकयति। लाकयति। रघ लग इत्येके। राघयति लागयति।

अञ्चु विशेषणे। २०३। अञ्चयति। अन्यत्राञ्चति।

लिगि चित्रीकरणे। २०४। लिङ्गयति। अन्यत्र लिङ्गति।

मुद संसर्गे। २०५। मोदयति सक्तून् घृतेन। अन्यत्र मोदते।

---

(29) क्वचिदयं मूर्धन्यान्तः पठ्यते। चपुस्तके मूर्धन्यान्तः।

त्रस धारणे। २०६। त्रासयति मृगान्। अत्र वारणे धारणशब्दः। अन्यत्र त्रस्यति। त्रसति।

उध्रस उञ्छे। २०७। ध्रासयति। पूर्वं एवायं धातुरिह पठ्यते। तेनाय मुदिदिति।

मुच प्रमोचने। २०८। मोचयति। अन्यत्र मुञ्चति मुञ्चते।

(4) आ स्वदः सकर्मकात्। स्वद आस्वादन इति वक्ष्यति। आ एतस्मात् सम्भविकर्मकादेव णिज् भवतीति मन्तव्यम्। असम्भावितकर्मत्वे तु व्यावृत्तिः। आङ्पूर्वात् स्वद एव सकर्मकादित्येके।

ग्रस ग्रहणे। २०९। ग्रासयति फलम्। अन्यत्र ग्रसते।

पुष धारणे। २१०। पोषयत्याभरणम्। अन्यत्र पोषति। पुष्णाति। पुष्यति।

दल विदारणे। २११। दालयति। उद्दालः। अन्यत्र दलति।

पट पुट लट लुट तुजि पिजि मिजि लुजि भजि भुजि लघि त्रसि पिसि दशि कुसि कुशि दसि घट घटि बृहि बर्हं बल्ह गुप धूप विच्छ चीव पुथ लोचृ लोक णद कुप तर्क बृतु बृधु भाषार्थाः। २१२।२४५। पाटयति अन्यत्र पटति। पोटयति। अन्यत्र पोटति। लाटयति। लोटयति। अन्यत्र लुटति लोटति। तुञ्जयति। अन्यत्र तुञ्जति। पिञ्जयति। अन्यत्र पिङ्क्ते। मिञ्जयति। लुञ्जयति। भञ्जयति। अन्यत्र भनक्ति। भुञ्जयति। लङ्घयति। अन्यत्र लङ्घते लङ्घति। त्रंसयति। त्रंसनः। पिंसयति। दंशयति। अन्यत्र दशति। कुंसयति। कुंसः। भ्रूकुंसः भ्रुकुंसः भ्रकुंसः। कुंशयति। दंसयति। घाटयति। अयं सङ्घातेऽपि। अतःपुनर्घटिः पठ्यते। अर्थभेदात्। अन्यत्र घटते घटयति। घण्टयति। घण्टा। बृंहयति। बृंहणा। वर्हयति। अन्यत्र वर्हते। वल्हयति। अन्यत्र वल्हते। गोपयति। अन्यत्र गोपायति। धूपयति। अन्यत्र धूपायति। विच्छयति। अन्यत्र विच्छायति। चीवयति। अन्यत्र चीवते। पोथयति। अपूपुथत्। अन्यत्र पुथ्यति। लोचयति। अलुलोचत्। अन्यत्र लोचते। लोकयति। अन्यत्र लोकते। नादयति। अन्यत्र नदति। कोपयति। अन्यत्र कुप्यति। तर्कयति। ऊहेऽप्ययमधीयते।

वर्त्तयति । अवीवृतत् अववर्त्तत् । अन्यत्र वर्त्तते । वर्द्धयति । अवीवृधत् अववर्धत् । अन्यत्र वर्द्धते । भासार्थो इत्येके । भासार्थी दीप्त्यर्थाः । तेऽप्यत्रेत्येके ।

पूरी आप्यायने । २४६ । पूरयति । अन्यत्र पूर्य्यते ।

रुज हिंसायाम् । २४७ । रोजयति । अन्यत्र रुजति ।

ष्वद आस्वादने । २४८ । आस्वादयति यवागूम् । असिष्वदत् । इति स्वदादिः ।

(5) आधृषाद्वा । धृषु प्रसहन इति वक्ष्यति । एतस्मात् प्राग् वा णिज्भवतीति मन्तव्यम् । चुरादित्वान्नित्यं प्राप्तस्य णिचो विकल्पः क्रियते । युजादिभ्यो ऽत्रापि क्वचिद् यथाभिधानं विकल्प इष्यते ज्ञापककरणादितुरक्तम् ।

युज पृच संयमने । २४९।२५० । योजयति योजति । अन्यत्र युनक्ति । पर्चयति पर्चति । अन्यत्र पृणक्ति ।

अर्च पूजायाम् । २५१ । अर्चयति अर्चति । युजादिषु ञितां तावत् कर्त्रभिप्राये क्रियाफले आत्मनेपदित्वम् । केवलानामप्यर्चिकथ्यर्द्दिशुन्धच्छदिमृषीणां स्वरितेत्त्वं मन्यन्ते । तेनार्चते इत्यपि भवति । अत्र च भ्वादावर्च पूजायामिति लिङ्गमुक्तम् । अन्यत्रार्चति ।

षह मर्षणे । २५२ । साहयति सहति । "स एवायं नागः सहति कलभेभ्यः परिभवम् ।" सहति प्रतिभटम् । "ततः प्रोदसहन् सर्वे ।" अन्यत्र सहते ।

ईर क्षेपे । २५३ । ईरयति ईरति । अन्यत्र ईर्त्ते ।

ली द्रवीकरणे । २५४ । विलापयति विलीनयति विलाययति लयति (30) । अन्यत्र लीयते लिनाति ।

वृजी वर्जने । २५५ । वर्जयति वर्जति । वर्जितम् । अन्यत्र वृङ्क्ते । वृणक्ति ।

---

(30) अत्र माधवः "विभाषा लीयतेरित्यात्त्वविकल्प (६।१।६१) मस्यापोच्छन् मैत्रेयो लीलोर्नुग्लुकाविन्यात्त्वपक्षे (७।३।३९) लुकौ विकल्पनाल्लुकं चोदाजहार । अनात्त्वे तु नुक् । तदभावे वृद्धायौ च । तदयुक्तम् । आत्त्वे लीनाति लीयत्योर्यका निर्देश इति भाष्ये उक्तत्वादस्यात्त्वाभावात् ।" इति ।

वृञ् आवरणे। २५६। वारयति वरति वरते। अन्यत्र वृणोति। वृणुते।

जॄ वयोहानौ। २५७। जारयति जरति। अन्यत्र जीर्य्यति जृणाति।

रिच वियोजनसंपर्चनयोः। २५८। रेचयति रेचति। अन्यत्र रिङ्क्ते रिणक्ति।

शिष असर्वोपयोगे। २५९। शेषयति शेषति। पर्य्यशेषयत् पर्य्यशेषत्। अन्यत्र शिनष्टि। विपूर्वोऽतिशये। विशेषयति विशेषति। विशिष्यते।

तप दाहे। २६०। तापयति तपति। तपते। अन्यत्र तप्यते तपतीति।

तृप तृप्तौ। २६१। तर्पयति तर्पति। अततर्पत् अतीतृपत्। तृपितम्। अन्यत्र तृप्यति तृप्नोति।

कृदी सन्दीपने। २६२। छर्दयति च्छर्दति। छर्दिष्यति। कृतादि-साहचर्य्यादिड्विकल्पं नास्य मन्यन्ते (31)। कृप्तः। कृप्तवान्। अन्यत्र च्छृणत्ति च्छृन्ते।

दृभी भये। २६३। दर्भयति दर्भति। दृब्धम्। अन्यत्र दृभ्यतीति।

दृभ संदर्भे। २६४। पूर्ववदुदाहरणम्। दृभितमिति विशेषः।

श्रथ मोक्षणे। २६५। श्राथयति श्रथति।

मी गतौ। २६६। माययति मयति। मेता। अचौरादिकैः साहचर्य्यात् मिमीषति। अन्यत्र मीनाति।

ग्रन्थ बन्धने। २६७। ग्रन्थयति ग्रन्थति। अन्यत्र ग्रथ्नाति। (32)

क्रथ हिंसायाम्। २६८। चौरस्योत्क्राथयति। क्रथति क्रथते। अन्यत्र क्राथयति।

शीक मर्षणे। २६९। शीकयति शीकति। अन्यत्र शीकते।

चीक च। २७०। चीकयति चीकति। चीका।

अर्द हिसि हिंसायाम्। २७१। २७२। अर्दयति अर्दति अर्द्दते। आर्दिदद्। आर्दीत्। अर्दिदिषति। हिंसयति हिंसति। अन्यत्र हिनस्ति।

---

(31) रौधादिकस्यैवेड्विकल्पः। अतएवायं निष्ठायामनिडर्थमीदित् पठ्यते।

(32) ऽपुस्तकेऽत्र श्रथ बन्धने श्राथयति श्रथतीति दृश्यते। एतल्लिपिकरप्रमाद इति प्रतिभाति। माधवीयधातुवृत्तौ भट्टोजिग्रन्थे चात्र ग्रन्थ बन्धन इत्यस्ति।

आङः षद पद्यर्थे । (33) २७३ । आसादयति आसीदति । आसन्ना । आसात्सीत् । अन्यत्र सीदति । असदत् ।

शुन्ध शौचकर्मणि । २७४ । शुन्धयति शुन्धति शुन्धते । शुधितम् । अन्यत्र शुन्धति ।

छद अपवारणे । २७५ । छादयति च्छदति च्छदते । उरश्छदः । छन्नः । छत्रम् । छात्रः । छदिः । छद्म । छादिः ।

जुष परितर्पणे । जोषयति जोषति । अन्यत्र जुषते । २७६ ।

धूञ् कम्पने । २७७ । धावयति धवति धवते । अन्यत्र धुनाति धुनीते । धूनोति । (34)

प्रीञ् तर्पणे । २७८ । प्राययति प्रयति प्रयते । ञित्त्वफलं केवले चरितार्थम् इति ण्यन्तात् परस्मैपदमेव ।

श्रन्थ ग्रन्थ सन्दर्भे । २७९ । २८० । ग्रन्थयति ग्रन्थति । अन्यत्र ग्रथ्नाति ग्रन्थते । श्रन्थयति श्रन्थति । अन्यत्र श्रन्थते श्रथ्नाति ।

आप्लृ लम्भने । २८१ । आपयति आपति । आपत् । अन्यत्राप्नोति (35)

तनु श्रद्धोपकरणयोः । २८२ । तानयति तनति । तनित्वा तन्त्वा । नितान्तम् । अन्यत्र तनोति तनुते । ततः । उपसर्गाच्च दैर्घ्ये । आतानयति आतनति । वितानयति वितनति । अन्यत्र आतनोति । वितनोति ।

वद सन्देशने । २८३ । वादयति वदते वदति । अन्यत्र वदति ।

मान पूजायाम् । २८४ । मानयति । मानति । अन्यत्र मीमांसते । इति परस्मैभाषा उदात्तेतः ।

भू प्राप्तावात्मनेपदी । २८५ । आकुस्मादात्मनेपदीति प्रकरणे भू

---

(33) पद्यर्थो गतिः ।

(34) "धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून् यत् कानने धवति चन्दनमञ्जरीश्च ॥ १ ॥" इति कविरहस्यम् । अयं भ्वादौ क्र्यादौ तुदादौ स्वादौ च । स्वादौ ह्रस्वोऽपि ।

(35) अत्र माधवः—"मैत्रेयेणापयत इत्यात्मनेपदमपि दर्शितम् । अन्ये तु नैतन् मृष्यन्ति ।" इति । अस्मदधिगतपुस्तकेषु त्वेतन्नास्ति ।

प्राप्ताविति वक्तव्ये आत्मनेपदीति वचनं केवलाण्णिजन्ताच्चात्मनेपदं यथा स्यात्। भावयते भवते। सूर्योद्गमनं सम्भावयते। इत्थम्भूतः। अन्यत्र भवति। (36)

वच भाषणे। २८६। वाचयति वचति। वाचयतः वचतः। अवीवचत् अवाचीत्। अन्यत्र वक्ति।

गर्ह निन्दने। २८७। गर्हयति गर्हति। अन्यत्र गर्हते।

मार्ग अन्वेषणे। २८८। मार्गयति मार्गति। अममार्गत् अमार्गीत्। (37)

कठि शोके। २८९। कण्ठयति कण्ठति। अचकण्ठत् अकण्ठीत्। अन्यत्र कण्ठते।

मृजू शौचालङ्कारयोः। २९०। मार्जयति मार्जति। मार्जिता मार्ष्टा। मार्जयित्वा मार्जित्वा मृष्ट्वा। मृष्टम्। अन्यत्र मार्ष्टि।

मृष तितिक्षायाम्। २९१। मर्षयति मर्षति। अन्यत्र मृष्यति मृष्यते। मर्षति।

धृष प्रसहने। २९२। धर्षयति धर्षति। अन्यत्र धृष्णोति।

पश बन्धने। २९३। पाशयति पशति।

इति युजादौ आधृषीयाः। एते युजादयो विकल्पितणिचः। इतोऽदन्ता उच्यन्ते।

कथ वाक्यप्रबन्धे। २९४। कथयति। अचकथत्। कथा।

वर ईप्सायाम्। २९५। वरयति। अववरत्।

गण संख्याने। २९६। गणयति। अजीगणत् अजगणत्। गण्यः। गणनीयः। गणेयः। प्रगण्यास्ते। प्रगणौ। सुगाण्। सुगाणौ। सुगाणः। सुगाण्ट्सु सुगाण्सु सुगाण्ठ्सु। (38)।

शठ श्वठ सम्यगाभाषणे। २९७। २९८। शठयति। श्वठयति।

---

(36) पुरुषकारधनपालशाकटायनादिमतानि मैत्रेयमतप्रतिकूलम्। एतन्मतेषु प्राप्त्यर्थेऽपि अयं परस्मैपदी। एवञ्च सुधाकरः सुराष्ट्रमभवदित्यादि प्रयुज्यत इत्याह। सुराष्ट्रमभवत्। शोभनं राज्यमलभतेत्यर्थः।

(37) वरं वरेण्यो नृपतेरमार्गीदिति भट्टिः।

(38) प्रपूर्वाद् गणयतेर्विच्, प्रगण्। क्विपि तु सुगाणिति। अनुनासिकस्य क्विझलो (७।४।१५)रिति दीर्घः।

पट वट ग्रन्थे । २९९ । ३०० । पटयति । वटयति । अन्यत्र पटति । वटति ।

रह त्यागे । ३०१ । रहयति । अररहत् । विरहः ।

स्तन गदी देवशब्दे । ३०२ । ३०३ । स्तनयति । स्तनयित्नुः । गदयति गदयित्नुः । "देवो मेघे सुरे राज्ञि" इति मननाद् देवशब्दे मेघध्वनावित्यर्थः । प्रथमाद्विवचननिर्देशो वैचित्र्यार्थः । (39)

पत गतौ । ३०४ । पतयति । पतयामास । पतयालुः । अन्यत्र पतति । अपप्तत् । (40)

पष अनुपसर्गे । ३०५ । पषयति । उपसर्गात्तु प्रपषति ।

स्वर आक्षेपे । ३०६ । स्वरयति । स्वरयिष्यति । स्वरः ।

रच प्रतियत्ने । ३०७ । रचयति । व्यरचयत् । अररचत् ।

कल संख्याने । ३०८ । गतौ च । कलयति । कलयामास ।

चह परिकल्कने । ३०९ । चहयति । विचहः । अन्यत्र चहति ।

मह पूजायाम् । ३१० । महयति । महयामास । महयाञ्चकार । अन्यत्र महति अमहदित्येके ।

सार कृप श्रथ दौर्बल्ये । ३११—३१३ । सारयति । कृपयति । श्रथयति । स्पृह ईप्सायाम् । ३१४ । स्पृहयति । स्पृहा । स्पृहयालुः ।

भाम क्रोधे । ३१५ । भामयति । अबभामत् । अन्यत्र भामते ।

सूच पैशुन्ये । ३१६ । सूचयति । सोसूच्यते । सूचिः । सूचसूत्रसत्रसाम-स्तेनसंग्रामसभाजस्थूलस्तनस्तोम इत्येतेषामषोपदेशत्वम् । षोपदेशत्वं ह्येकाचामेवेष्यते । ष्मिष्वदिष्वञ्जिष्वपिभि रेकाज्भिः साहचर्य्यात् । तेन सोसूच्यते तिस्तनयिषति सोसूत्र्यत इत्यादौ न षत्वम् ।

---

(39) अज्दन्त्यपरा इति षोपदेशलक्षणमनेकाच्सु न । ष्मिङाद्येकाच्साहचर्य्यात् । तेन तिस्तनयिषतीति षत्वं न । अभिनिस्तनो मेघस्येति संज्ञाभावान्न षत्वम् ।

(40) अत्र पत गतौ वेति माधवादिषु पाठः । वा णिजन्त इति वाशब्दस्यार्थः । वादन्त इत्येके । प्रथमपक्षे पतयति पतति । पताञ्चकार । णिज्विकल्पस्य प्रयोजनमस्यानेकाच्त्वादाम् । पताञ्चकार । अपतीदिति माङ् । अदन्तपक्षे पतयति पातयति । अपीपतत् ।

खेट भक्षणे । ३१७ । खेटयति । आखेटना । खोट इत्येके । खोटयति । खोट इति च । ३१८ ।

चोट क्षेपे । ३१९ । चोटयति । चोटकः ।

गोम उपलेपने । ३२० । गोमयति । गोमयाम्बभूव ।

कुमार क्रीड़ायाम् । ३२१ । कुमारयति । कुमारयाञ्चकार कुमारयामास । कुमारः । कुमारी ।

कुशूल इत्येके । ३२२ । कुशूलयति । कुशूलकः ।

शील उपधारणे । ३२३ । शीलयति । शीलितः । मांसशीलः । मांसशीला ।

साम सान्त्वने । ३२४ । सामयति । अससामत् ।

वेल कालोपदेशे । ३२५ । वेलयति । वेला । काल इत्यपि धातुरित्येके । कालयति । अचकालत् । कालना ।

पल्यूल लवनपवनयोः । ३२६ । पल्यूलयति । पल्यूलयामास ।

वात सुखसेवनयोः । ३२७ । वातयति । अववातत् ।

गवेष मार्गणे । ३२८ । गवेषयति । अजगवेषत् । गवेषणा ।

वास उपसेवायाम् । ३२९ । वासयति । अववासत् ।

निवास आच्छादने । ३३० । निवासयति । निवासयामास । अनिनिवासत् । निनिवासयिषति ।

भाज पृथक् कर्मणि । ३३१ । भाजयति । अबभाजत् । भाजनम् ।

सभाज प्रीतिदर्शनयोः । ३३२ । सभाजयति । अससभाजत् ।

ऊन परिहाणे । ३३३ । ऊनयति । ऊनः । न्यूनः । माषोनः । औनयीत् । औनिनत् । (41)

ध्वन शब्दे । ३३४ । ध्वनयति । अदध्वनत् । अन्यत्र ध्वनति ।

कूट परिदाहे । ३३५ । कूटयति । कूटम् ।

---

(41) औनयीदिति तुच्छान्दसं रूपम् । तथाच नोनयतिध्वनयत्येलयत्यर्दयतिभ्य इति (३।१।५१) च्छन्दसि चङ्निषेधः । काममूनयीरिति तत्रोदाहरणम् । अड़ागमाभावश्च वैदिक एव । भाषायामौनिनदिति वृत्तिकारादयः । भट्टोजिमते तु औनमदिति ।

कीत ग्राम कुण गुण चामन्त्रणे । ३३६।३३९ । चकारेण कूट इत्यपेक्षते । कीतयति । ग्रामयति । कुणयति । गुणयति । कूटयति ।

स्तेन चौर्य्ये । ३४० । स्तेनयति । अतिस्तेनत् । स्तेनः । स्तेयम् । इति परस्मैभाषा उदात्ताः ।

अथ आ गर्वादात्मनेपदिनः ।

पद गतौ । ३४१ । पदयते । पदयाञ्चक्रे । अन्यत्र पद्यते ।

गृह ग्रहणे । ३४२ । गृहयते । गृहयाञ्चक्रे । गृहम् । गृहयालुः ।

मृग अन्वेषणे । ३४३ । मृगयते । मृगयाञ्चक्रे । मृग्यतीति कण्ड्वादि-पाठात् । (42)

कुह विस्मापने । ३४४ । कुहयते । कुहयाञ्चक्रे । कुहकः । कुहः । कुहना ।

शूर वीर विक्रान्तौ । ३४५।३४६ । शूरयते । अशुशूरत । शूरः । वीरयते । अविवीरत । वीरः । वीर्य्यम् ।

स्थूल परिबृंहणे । ३४७ । स्थूलयते । अतुस्थूलत । तुस्थूलयिषते । स्थूलः ।

अर्थ याच्ञायाम् । ३४८ । अर्थयते । अर्थयाञ्चक्रे । आर्त्थयत । अर्त्ति-थयिषते ।

सत्र सन्तानक्रियायाम् । ३४९ । सत्रयते । सिसत्रयिषते । सत्रम् ।

गर्व माने । ३५० । गर्वयते । गर्वः । अन्यत्र गर्वति । गर्वप्रभृतिष्व-दन्तत्वप्रयोजनं न दृश्यते । णिचोऽनित्यत्वेन यङोऽभावार्थमिति केचित् । (43) इति पदादिः ।

सूत्र वेष्टने । ३५१ । सूत्रयति । सूत्रयाञ्चकार । असुसूत्रत् । सोसूत्र्यते ।

मूत्र प्रस्रवणे । ३५२ । मूत्रयति । मोमूत्र्यते ।

रूक्ष पारुष्ये । ३५३ । रूक्षयति । रूक्षपेषं पिनष्टि । रूक्षम् ।

---

(42) मृग्यतीति दिवादिपाठादिति केचिन्मन्यन्ते इति मान्द्राजपुस्तकद्वये पाठः । न रत्न मन्विष्यति मृगयते हि तदित्यत्र तु कर्मणि लकारः ।

(43) भट्टोजिमते तु "अदन्तत्वसामर्थ्याण्णिज्विकल्पः । धातोरन्त उदात्त इति (६।१।१६२)। लिटि आम् च फलम् ।" इति ।

पार तीर कर्मसमाप्तौ। ३५४।३५५। पारयति। तीरयति।

पुट संसर्गे। ३५६। पुटयति। अपुपुटत्। अन्यत्र पुटति।

कत्र शैथिल्ये। ३५७। कत्रयति। कात्रेयकः।

(6) प्रातिपदिकाद् धात्वर्थे बहुलमिष्टवच्च।

प्रातिपदिकाद्धात्वर्थे णिज् भवति। तस्मिंश्च णिचि इष्टवत् (44) कार्य्यमतिदिश्यते। पटुमाचष्टे करोति वा पटयति। अपीपटत्। लघयति। अलीलघत्। परत्वाद् वृद्धौ कृतायां सन्वद्भावलोप इति अनग्लोपित्वम्। केचित् पुनर्नाग्लोप इत्यत्र (७।४।२) अगिति प्रत्याहारग्रहणसामर्थ्यादकृतायामेव वृद्धौ सन्वद्भावलोप इत्यग्लोपित्वे टिलोपमिच्छन्ति। तन्मते चापपटत् अललघदिति भवति। आशिषं करोति आशिषयति। प्रकृत्यैकाजिति (६।४।१६३) प्रकृतिभावान्न टिलोपः। पठन्तमाचष्टे पठयति। युवानमाचष्टे यवयति। स्रग्विणमाचष्टे स्रजयति। स्थिरमाचष्टे स्थापयति। बाहुल्याद् वृद्ध्यभावे स्थपयति च। कुमारीमाचष्टे कुमारयति। खट्वयति। (45)

(7) तत्करोति तदाचष्टे।

यद्यप्यनेन वाक्यार्थो निर्दिश्यते तथाप्याख्यातार्थस्य प्राधान्यात् प्रधानमाख्यानं करणं वेति तस्यैव प्रत्ययार्थत्वम्। परिशिष्टस्तु प्रकृत्यर्थ इति द्वितीयान्तात् प्रत्ययः। तथाचैवोदाहृतम्।

(8) तेनातिक्रामति।

अश्वेनातिक्रामति अश्वयति। हस्तिनातिक्रामति हस्तयति।

(9) धातुरूपञ्च।

धातुः स्वेन रूपेणावतिष्ठते। बहुलवचनानुवृत्तेः कृल्लुक् प्रकृतिवच्च कारकं भवति। सीताहरणमाचष्टे सीतां हारयति। कंसवधमाचष्टे कंसं घातयति। आख्यानात् कृदन्तात् तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्चकारकमित्यनेन (३।१।२६, वा) चायमर्थो दर्शितः।

---

(44) इष्टवत्कार्य्यं टिलोपदिकम्। णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोप-यणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थमिति (६।४।१५५, वार्त्तिक)।

(45) पटीमाचष्टे पट्वयति। बहुलवचनादिति अधिकः पाठोऽत्र दृश्यते गघपुस्तकयोः।

(10) कर्त्तृकरणाद् धात्वर्थे ।

कर्त्तुर्यत् करणं साधकतमं ततो णिज् भवति। दात्रेण लुनाति दात्रयति। असिना च्छिनत्ति असयति। परशुना च्छिनत्ति परशयति। करणस्य कर्त्तृग्रहणं विशेषणम्। किमर्थम्? चक्षुरादीन्द्रियवचनो यः करणशब्दस्तत्परिग्रहो मा भूदिति। तत्परिग्रहे चक्षुरादिशब्देभ्य एव स्यात्।

चित्र चित्रीकरणे। ३५८। चित्रयति आलेख्यं करोतीत्यर्थः। चित्रं करोति चित्रीयत इत्याश्चर्यं करोतीत्यर्थः। कदाचिद् दर्शने च। चित्रयति चक्षुः। चित्रयति वक्षः।

अंस समाघाते। ३५९। अंसयति। अंसः।

वट विभाजने। ३६०। वटयति। वटेः पुनः पाठोऽर्थभेदात्।

लज प्राणने। ३६१। लजयति।

वटि लजि इत्येके। ३६२।३६३। वण्टयति। लञ्जयति। लञ्जना। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यपरे। वण्टापयति। लञ्जापयति।

मिश्र सम्पर्के। ३६४। मिश्रयति। मिश्रं करोति मिश्रतीति च दर्शितम्।

संग्राम युद्धे। ३६५। संग्रामयते। असंग्रामयत। तस्थौ सिसंग्रामयिषुः शितेषुरिति भट्टिः। संग्रामः।

स्तोम श्लाघायाम्। ३६६। स्तोमयति। स्तोम्यम्। अग्निष्टोमः।

छिद्र कर्ण भेदने। ३६७।३६८। छिद्रयति। कर्णयति। कर्णेनानुभवति आकर्णयति। कर्णेन भावयति कर्णयतीति व्याचक्षते।

अन्ध दृष्ट्युपघाते। ३६९। अन्धयति। अन्धः।

दण्ड निपातने। ३७०। दण्डयति। अददण्डत्। दण्डः।

अङ्क लक्षणे। ३७१। अङ्कयति। अङ्कः। अन्यत्राङ्कते।

अङ्ग पदे लक्षणे च। ३७२। अङ्गयति। अङ्गयामास। अङ्गना। अन्यत्र अङ्गति।

सुख दुःख तत्क्रियायाम्। ३७३। ३७४। तदिति सुखदुःखप्रातिपदिकार्थो निर्दिश्यते। सुखयति। दुःखयति। तत्करोतीत्येवं सिद्धे सोप-

सर्गसमुदायाण्णिजर्थ मिदम् । असुखयत् । अदुःखयत् । सुखं वेदयते सुखायते । दुःखं वेदयते दुःखायत इत्येव भवति । सुख्यति दुःख्यतीति कण्ड्वादिपाठात् ।

रस आस्वादनस्नेहनयोः । ३७५ । रसयति । निरसयति । अन्यत्र रसति ।

व्यय विक्तसमुत्सर्गे । ३७६ । व्ययति । अव्ययत् । अन्यत्र व्ययति व्ययते । अव्ययीत् ।

रूप रूपक्रियायाम् । ३७७ । रूपयति । रूपं पश्यति निरूपयति । विरूपयति वस्त्रम् ।

छेद द्वैधीकरणे । ३७८ । छेदयति । अचिच्छेदत् ।

व्रण गात्रविचूर्णने । ३७९ । व्रणयति । अव्रणयत् । व्रणम् ।

वर्ण वर्णक्रियाविस्तारगुणवचनेषु । ३८० । वर्णयति । वर्णयामास । वर्णं गृह्णाति वर्णयतीति च दर्शितम् ।

लाभ प्रेरणे । ३८१ । लाभयति । लाभयाञ्चकार । प्रलाभः । उपलाभः ।

(11) बहुलमेतन्निदर्शनम् ।

चुरादावदन्तधातुदर्शनं बहुलं वेदितव्यम् । अतोऽनुक्ता अपीह धातवो ज्ञेयाः ।

पर्ण हरितभावे । ३८२ । पर्णयति ।

विष्क दर्शने । ३८३ । विष्कयति ।

क्षप प्रेरणे । ३८४ । क्षपयति । क्षपितो विप्रः ।

वस निवासे । ३८५ । वसयति ।

तुत्थ आवरणे । ३८६ । तुत्थयति । अतुत्थयदुत्थितोऽद्रे रिति माघः । तुत्थितः । एवं गड्यति आन्दोलयति डलयति तुजयति तुजः शुण्ठयति शुण्ठः स्फटयति स्फटः स्फटिकः स्फटा ओजयति ओजः स्फुटयति स्फुटा स्फुटितः अवधीरयतीत्यादयो यथाभिधानं वेद्याः ।

(12) णिङङ्गान्निरसने ।

अङ्गवाचिनः प्रातिपदिकाण्णिचोऽपवादो णिङ् भवति निरसनेऽर्थे । हस्तौ निरस्यति हस्तयते । पादयते । चक्षयते ।

(13) श्वेताश्वाश्वतरगालोड़िताह्वरकाणामश्वतरेतकलोपश्च ।

णिङिति वर्त्तते । धात्वर्थं इति च । श्वेताश्वादीनाञ्चतुर्णां यथासंख्य-मश्वतरेतक इत्येते लुप्यन्ते णिङ् च धात्वर्थे भवति । श्वेताश्वमाचष्टे तेनाति क्रामति वा श्वेतयते । अश्वतरमाचष्टे अश्वयते । गालोड़ित (46) माचष्टे गालोड़यते । आह्वरकमाचष्टे आह्वरयते । अबाधापि णिचो बाहुलकादिति श्वेताश्वयतीत्याद्यपि भवति ।

(14) पुच्छादिषु धात्वर्थं इत्येव सिद्धम् ॥ (47)

पुच्छादिषु प्रातिपदिकेभ्यो धात्वर्थं इत्येव सिद्धम् आत्मनेपदं णिजन्ताद् बहुलवचनाद् विज्ञेयम् । एवञ्च पुच्छभाण्डचीवराण्णिङिति (३।१।२०) न कर्त्तव्यमिति । सिद्धशब्दश्चायं मङ्गलार्थः । आदौ च वृद्धिशब्दः एध वृद्धाविति । मध्ये टुओश्वि गतिवृद्ध्योरिति वृद्धिशब्दः । एवं त्रिमङ्गलमिदं शास्त्रं समाप्तमिति । श्रीः । (48)

वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम् ।
नाम्ना तन्त्रप्रदीपं यो विवृता स्तेन धातवः ॥ १ ॥

---

(46) गालोड़ितं वाचां विमर्शः ।

(47) अत्र धातुपाठान्तर्गतगणसूत्राणि पठ्यन्ते यथा।—(४) घटादयःषितः । घटादयो मितः । (३) जनीजृष्क्नसुरञ्जोऽमन्ताश्च । (४) ज्वलह्वलह्मलनमामनुपसर्गाद्वा । (५) ग्लास्नावनुवमाञ्च । (६) कम्यमिचमाञ्च । (७) शमोऽदर्शने । (८) यमोऽपरिवेषणे । (९) स्खदिरवपरिभ्याञ्च । इति भ्वादौ ।

(१०) चर्करीतञ्च इत्यदादौ । (११) स्वादय उदितः । इति दिवादौ (१२) छन्दसि । इति स्वादौ । (१३) नान्ये मितोऽहेतौ । (१४) कुस्मनाम्नो वा । (१५) हन्त्यर्थाश्च । (१६) ञौ स्वदः सकर्मकात् । (१७) आ धृषाद्वा । (१८) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । (१९) तत् करोति तदाचष्टे । (२०) तेनाति क्रामति । (२१) धातुरूपञ्च । (२२) कर्त्तृकरणाद्धात्वर्थे । (२३) बहुलमेतन्निदर्शनम् । (२४) णिङङ्गान्निरसने । (२५) श्वेताश्वाश्वतरगालोड़िताह्वरकाणामश्वतरेतक लोपश्च (१६) पुच्छादिषु धात्वर्थ इत्येव सिद्धम् । इति चुरादौ ।

(48) एभ्योऽन्ये च केचित् सौत्रा धातवः सन्ति । ते च यथा—

१ । ऋतिः—ऋतेरीयङित्यत्रोक्तः । ( ३।१।२९ ) ऋतीयते । प्रार्त्तीयते । उपार्त्तीयते । ऋतीयाञ्चक्रे आनर्त्त । ऋतीयिष्यते अर्त्तिष्यति । आर्त्तीयत । आर्त्तीयिष्ट आर्त्तीत् । आर्त्तितीयिषते आर्त्तितिषति । ऋतीयित्वा आर्त्तित्वा ऋतित्वा । ऋतीया । "जुगुप्सा ऋतीया घृणा ।"

आकृष्य भाष्यजलधेरथ धातुनाम-
पारायणक्षपणपाणिनिशास्त्रवेदी ।

---

२ । स्तन्भुस्तुन्भुस्कन्भुस्कुन्भु ।२-५ । तथाहि सूत्रम्—"स्तन्भुस्तुन्भु स्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च । (३।१।८२) सर्वे रोधनार्थाः । माधवमते तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थं श्चतुर्थौ धारणार्थः । स्तभ्नोति स्तभ्नाति । विष्टभ्नाति विष्टभ्नोति । अवष्टभ्नोति अवष्टभ्नाति । तस्तम्भ । अवतष्टम्भ । स्तम्भिष्यति । स्तभ्नोतु स्तभ्नातु । स्तभ्नुहि स्तभान । स्तभ्नुयात् स्तभ्नीयात् । स्तभ्यात् । अस्तभत् अस्तम्भीत् । तिस्तम्भिषति । प्रतितिष्टम्भिषति । तास्तभ्यते । स्तम्भयति । अतस्तम्भत् । प्रतिष्टम्भः । बाहुप्रतिष्टम्भविवृद्धमन्युरिति रघुकाव्ये । स्तम्भित्वा स्तब्ध्वा । स्तब्धः । उत्तम्भः । उत्तम्भितोड्डुभिरतीवतरां शिरोभिरिति माघः । २ ।

स्तुभ्नोति स्तुभ्नाति । तुष्टुम्भ । स्तुम्भिष्यति । अस्तुम्भीत् । स्तुम्भित्वा स्तुब्ध्वा । स्तुब्धः । ३ ।

स्कभ्नोति स्कभ्नाति । विष्कभ्नोति विष्कभ्नाति । चस्कम्भ । स्कम्भिष्यति । अस्कम्भीत् । स्कम्भित्वा स्कब्ध्वा । स्कब्धः । ४ ।

स्कुभ्नोति स्कुभ्नाति । चुस्कुम्भ । स्कुम्भिष्यति । अस्कुम्भीत् । स्कुम्भित्वा स्कुब्ध्वा । स्कुब्धः । ५ ।

६ । सातिः=सुखे । तथाच सूत्रम्—"अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । (३।१।१३८) हेतुमण्णन्तः । सातयति । सातयः । क्विपि सात् । परमात्मेत्यर्थः । सात्वन्तो भक्ताः । ६ ।

७ । जु—गतौ वेगे च । सूत्रञ्च—"जुचंक्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ।" (३।२।१५०) जवति । जुजाव । जोता । अजन्तत्वादनिट्त्वम् । जोष्यति । अजावीत् । जुजूषति । अजीजवत् । जवनः । प्रजवी । जूः । जुवौ । जूतिः । जवः । विजावको नाम देशः । वैजावकः । कच्छादिभ्यश्चेत्यण् (४।२।१३३) शैषिकः । ७ ।

कालापचान्द्रमततत्त्वविभागदक्षो
धातुप्रदीपमकरोज्जगतो हिताय ॥ २ ॥
इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ धातुप्रदीपे
चुरादीनां वृत्तिः ॥ १० ॥

—o—

धातुप्रदीपश्च परिसमाप्तः ॥ शुभम् ॥

---

८। तु गतिवृद्धिहिंसासु। सूत्रञ्च—"तुरुस्तुशम्यमः सार्वधातुके" (७।३।९५)। अयञ्च लुग्विकरण इति स्मरन्ति। तेनायमदादिः। तौति तवीति। तुतः तुवीतः। तुताव। तोता। तोष्यति। अतौषीत्। अयञ्छान्दस इत्यापिशलिमतमित्यदादिषूक्तम्। ८।

९। दभिः—अयं वार्त्तिकोक्तः। तथाच खत्प्रकरणे लपिदभिभ्याञ्चेति वक्तव्यम् ( ३।१।१२४, वा )। दभति। ददाभ। दाभ्यम्। ९।

१०। चुलुम्प इति च वार्त्तिकोक्तो धातुः। चुलुम्पति चुलुम्पाञ्चकार। एभ्योऽधिकाः केचित् चदितदिशुप्रभृतय उणादिषु उक्ता इति शम्। १० ॥

इति श्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्यकृतं
धातुप्रदीपविवरणं समाप्तम् ॥

